कविहृदयम् -

# अभिवृद्धिः स्यात्, किन्तु कीदृशी ?

**सोपानानि तिरोहितानि पदवी छन्ना तृणैर्नूतनैः**
**कालुष्यं पयसां विलोक्य शनकैः उड्डीय हंसा गताः ।**
**माधुर्यं न मधुव्रतोदितगिरां पद्मानि मग्नानि के**
**भेकानामिह गर्जितं परमहो वृद्ध्यैव नष्टं सरः ।।**

कविः कश्चन सरोवरस्य गतिं वर्णयति - "वृष्ट्यादिकारणतः जलसमृद्धिः जाता सरोवरे। तेन सोपानानि जले मग्नानि जातानि। जले कालुष्यम् उत्पन्नम्। अतः हंसाः सरोवरं परित्यज्य गताः। पद्मानि जले निमग्नानि जातानि। भ्रमराणां मधुरध्वनिः लुप्तः जातः। इदानीं तत्र मण्डूकानां रटनं विजृम्भते। एवं सरोवरं वृद्धिकारणतः एव नष्टं जातम्" इति।

वृद्धिः प्राप्तव्या इति सर्वेषाम् इच्छा। वृद्धिप्राप्तीच्छा न केवलं मानवजीवने; अपि तु संस्था, यन्त्रागाराणि, कार्यालयाः, ग्रामः, नगरं, देशः, समाजः - इत्येवं सर्वत्र वृद्धेः अपेक्षा क्रियते। वृद्धिप्राप्तीच्छा अनुचिता इति वक्तुं न शक्नुमः वयम्। एतावत् तु वदामः यत् कीदृशी वृद्धिः प्राप्तव्या इति विचिन्त्य विवेकयुक्तः निर्णयः आश्रयणीयः इति।

सामान्यतः लोके किं दृश्यते ? धनवृद्धौ इच्छा, भोगसाधनवृद्धौ इच्छा, पदवी (स्थान) वृद्धौ इच्छा वा विशेषतः दृश्यते। एतादृश्यः इच्छाः स्वार्थैकसम्पादनोद्देशिकाः भवन्ति इत्यतः एताः अप्रशस्ताः इति प्राज्ञाः वदन्ति। तत्रापि अनीतिमार्गम् अवलम्ब्य पूर्यमाणाः एताः इच्छाः तावत् सर्वथा निन्द्याः। किन्तु दौर्भाग्यं नाम लोके एषा एव प्रवृत्तिः विशेषतः दृश्यते। वस्तुतस्तु एषा न वृद्धिः, अपि तु अधोगतिः।

व्यक्तिजीवने यत् एतत् चिन्तनं दृश्यते तदेव समाजजीवने अपि दृश्यते इदानीम्। राष्ट्रजीवने अपि एषा एव प्रवृत्तिः दृश्यते। 'वृद्धिः सर्वेषां प्रिया' इति राजकीयनेतारः जानन्ति। अतः जनानां पुरतः विविधवृद्धीनां कल्पनां नयवचनैः उपस्थापयन्ति ते। वृद्धिः प्राप्ता चेत् सुखम् इति चिन्तयन्तः जनाः मतदानेन तान् नायकान् अनुगृह्णन्ति। जनैः चिताः नायकाः जनप्रीतिसम्पादनार्थं दर्शनमात्रसुभगां वृद्धिं प्रदर्शयन्ति। एवं प्रवर्तते विषचक्रम्। 'कीदृशी अभिवृद्धिः समाजस्य जनानां च हिताय भवति' इति चिन्तयितारः विरलाः। नैतिकी अभिवृद्धिः एव प्रशस्ता इति चिन्तयन्तः के वा तद्विषये प्रयतमानाः दृश्यन्ते ? अतः एव खलु अस्माकं देशस्य स्थितिः, कविना प्रस्तुतस्य सरसः स्थितिः इव एव अस्ति ?

# BAND-AID®

# Funtest

हर बैण्ड-एड
फ़नटेस्ट पैक के साथ दो
फ़नस्टिक्स* फ़्री

डॉ. क्वैक
एली
चिंपू
पुसी
पंटर
हूटर
टॉमी
कुकू
रेक्स

जल्दी करो!

## अपने फ़नस्टिक्स* जमा करना शुरू करो. अभी से!

** ख़ुशबूदार प्लास्टिक क्रेऑन्स*

नियम व शर्तें

1. इस प्रतियोगिता में 4 से 15 वर्ष के बच्चे भाग ले सकते हैं और यह प्रतियोगिता सिर्फ भारतीय नागरिकों के लिए ही है.
2. जॉन्सन एण्ड जॉन्सन और ओगिल्वी एण्ड मेथर से जुड़े कर्मचारी व उनके सगे संबंधी इस प्रतियोगिता में भाग नहीं ले सकते हैं.
3. एक प्रतियोगी जितनी चाहे उतनी एंट्रीस भेज सकता है.
4. हर एंट्री पूरी होनी चाहिए. अधूरी व अस्पष्ट एंट्रीस को गिना नहीं जाएगा.
5. एंट्रीस प्राप्त करने की अंतिम तारीख 28 फरवरी 1995 है. पर हाँ, कंपनी, अंतिम तारीख को बढ़ाने या उसे सीमित करने का पूरा अधिकार रखती है.

EXPRESS BLOCK

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अपत्यम् - | Children | परिणता - | Expert |
| अभिज्ञातवान् - | Recognised | प्रसवः - | Child birth |
| अस्थीनि - | Bones | पुत्तिका - | White ant |
| अहितुण्डिकः - | Snake-charmer | फणा - | Hood |
| आशीः - | Blessing | बुद्बुदः - | Bubble |
| काचकम् - | Glass | भूस्वामी - | Landlord |
| कुट्टनम् - | Pounding | युगपत् - | All at once |
| खातम् - | Valley | लुण्ठाकः - | Robber |
| गुहा - | Cave | वज्रम् - | Diamond |
| गृध्रः - | Vulture | वल्कलम् - | Bark garment |
| चञ्चूः - | Beak | वल्मीकः - | Ant-hill |
| चिक्रोडः - | Squirrel | वितानम् - | Pandal |
| चिता - | Selected | शम्बूकः - | Snail |
| चूडाकर्म - | Tonsure ceremony | शिबिका - | Palanquin |
| जम्बूवृक्षः - | Rose apple tree | शुक्तिः - | Oyster-shell |
| जल्पनम् - | Gossip | शृङ्खला - | Chain |
| तरणम् - | Swimming | सम्भ्रमः - | Hurry |
| ताडपत्राणि - | Palm leaves | सीमा - | Border |
| दायित्वम् - | Responsibility | स्नुषा - | Daughter-in-law |
| द्योतयति - | Enlightens | हरिणः - | Deer |

# चन्दमामा

संस्थापकः - 'चक्रपाणिः'    सञ्चालकः - 'नागिरेड्डी'




## बालेषु परिसरप्रज्ञा

दशवर्षेभ्यः पूर्वं प्रवृत्ता घटना एषा । त्रिंशद्राज्येभ्यः निर्वाचिताः प्रमुखाः 'बालाः परिसरः च' इति विषये चर्चां कर्तुं देहलीनगरे सम्मिलिताः आसन् । सर्वे अपि प्रतिनिधयः चर्चार्थं समग्रम् इतिवृत्तं सञ्जीकृत्य एव आगतवन्तः आसन् । सज्जतायाः उद्देशः तु स्पष्टः एव आसीत् यत् - कः अत्यधिकम् अङ्कं प्राप्नुयात्, केन च पदकबिरुदादिकं प्राप्येत इति ।

मुख्यातिथिरूपेण आगतः प्रसिद्धः परिसरतज्ञः श्रीसुन्दरलाल्-बहुगुणमहोदयः सम्मेलनं प्रति आगतान् प्रतिनिधीन् उद्दिश्य - ''भवत्सु कति जनाः परिसरवर्धनार्थं स्वयं सस्यम् आरोपितवन्तः ?'' इति पृष्टवान् । आगताः सर्वे अपि प्रतिनिधयः हस्तम् उत्तोलयन्ति इति बहुगुणवर्यस्य आशयः आसीत् । किन्तु तेषु एकः अपि हस्तं न उत्तोलितवान् । एतत् दृष्ट्वा बहुगुणवर्यः दिग्भ्रान्तः ।



चीनादेशस्य प्रसिद्धं किञ्चन आभाणकम् अस्मिन् सन्दर्भे स्मृतिपथम् आयाति । आभाणकस्य तात्पर्यम् एतत् - 'यदि भवन्तः एकवर्षाभ्यन्तरे एव प्रतिफलम् अपेक्षन्ते, तर्हि कृषिकार्यं कुर्वन्तु । किन्तु भवतां पुत्रस्य भविष्यचिन्तनसमये एकं सस्यम् आरोपयन्तु' इति ।

सन्तोषस्य वार्ता नाम - इदानीम् एव बहवः शालाव्यवस्थापकाः स्वछात्रान् प्रेरितवन्तः सन्ति - शालायाः आवरणे सस्यम् आरोपणीयम् इति । ओरिस्साराज्यस्य कश्चित् शिक्षकः एतद्विषये महान्तं प्रयोगं कुर्वन् अस्ति । सः शिक्षकः काञ्चित् छात्रां सूचितवान् यत् - तया आरोपितस्य सस्यस्य पार्श्वे एव उपविश्य गायतु इति । अन्यः अपि कश्चित् छात्रः शिक्षकेण सूचितः आसीत् यत् - तेन आरोपितस्य सस्यस्य विषये प्रीत्यादिकं न प्रकटनीयम् इति । आश्चर्यं नाम यस्य सस्यस्य विषये प्रीत्यादयः दर्शिताः, तत् सस्यं मासद्वयाभ्यन्तरे एव विशेषाभिवृद्धिं प्राप्नोत् ।

एतस्य प्रयोगस्य द्वारा शालाशिक्षकैः छात्राः बोधिताः यत् - वृक्षाः अपि मानवाः इव सजीवाः इति ।

केवलं पठ्यपुस्तकपठनेन उपन्यासश्रवणेन वा मानवः परिसरविषये अधिकं ज्ञातुं न शक्नोति, अपि तु स्वहस्तेन एव सस्यानि आरोप्य प्रीत्या तेषां सस्यानां पोषणं कृत्वा समृद्धरूपेण तेषां वर्धनं यदा पश्यति, तदा एव परिसर-विषये अधिकं ज्ञातुं शक्नोति मानवः ।

सम्पुटः - ११    जनवरी - १९९५    सञ्चिका - १०

प्रतिकृतिमूल्यं - रू. ५.०० * वार्षिकं ग्राहकशुल्कं - रू. ६०.००






वार्ताविशेषः -

# हैटिदेशे प्रजाधिपत्यम्



अक्टोबर्मासस्य १५ तमदिनाङ्कः हैटिजनानां सन्तोषदायकः दिवसः आसीत्। यतः तस्मिन् एव दिने तस्य देशस्य जनानां प्रियनायकः जिन् बेर्ट्रण्ड् अरिस्टैड् अध्यक्षपदवीं निर्वोढुं प्रवसात् प्रतिनिवृत्तः। सैन्याधीन्यात् देशस्य प्रजाप्रभुत्वं प्रति आनयनार्थं १९९१ वर्षात् अपि प्रयत्नः प्रचलति स्म। सैन्याधिकारिणः लेफ्टिनेण्ट् जनरल् रावोल् सैड्रास्वर्यस्य विषये अमेरिकादेशः तीव्रं निबन्धनं कृतवान् आसीत्।

अमेरिकादेशस्य भूतपूर्वः अध्यक्षः जिम्मिकार्टर्वर्यः वर्षत्रयात् हैटिदेशस्य प्रजाप्रभुत्वविषये प्रयतमानः एव आसीत्।

१९९० तमे वर्षे प्रवृत्ते प्रथमप्रजाप्रभुत्वनिर्वाचने अरिस्टैड् अध्यक्षरूपेण निर्वाचितः, सप्तमासाभ्यन्तरे एव अध्यक्षपदवीतः निष्कासितः च।

पञ्चशतवर्षेभ्यः पूर्वं क्रिस्टफर् कोलम्बस्वर्यः यदा अमेरिकाम् अन्विष्टवान्, (१४९२) तस्मिन् एव वर्षे हैटिद्वीपः अपि तेन अन्विष्टः आसीत्। कोलम्बस्वर्यः 'हिस्पनोला' नाम्ना हैटिदेशस्य नामकरणं कृतवान्। 'हिस्पनोला' नाम 'लघुस्पैन्' इत्यर्थः। हिस्पनोलानिवासिनः रेड् इण्डियन् जनाः तं प्रदेशं 'हैटि' नाम्ना व्यवहरन्ति स्म। तेन एव नाम्ना इदानीं देशस्य पश्चिमभागः प्रसिद्धिं गतः अस्ति। हैटिदेशस्य पूर्वभागः 'डोमिनिकन् रिपब्लिक्' रूपेण परिवृत्तः अस्ति।

स्पैन्जनाः सुन्दरं हैटिद्वीपं गत्वा वासम् आरब्धवन्तः। तत्स्थानीयान् रेड् इण्डियन् जनान् नामावशिष्टान् कृतवन्तः च। १७ शतकस्य अन्तिमभागे हैटिद्वीपः फ्रेञ्चजनानाम् अधीनः सन् सम्पद्भरितदेशरूपेण अभिवृद्धिं प्राप्नोत्। १८ शतकस्य अन्तिमभागे प्रवृत्तस्य विप्लवस्य कारणतः हैटिदेशे अपि जनानां स्वातन्त्र्यदाहः आरब्धः। एतन्मध्ये हैटिदेशे फ्रेञ्चजनानाम् अधिकारस्य रक्षणार्थं नेपोलियन्वर्यः कांश्चन सैनिकान् हैटिं प्रति प्रेषितवान्। किन्तु तस्मिन् समये हैटिदेशे उत्पन्नात् विषमशीतज्वरात् भीताः सैनिकाः ततः पलायनं कृतवन्तः इति श्रूयते। १८०४ तमवर्षस्य जनवरीमासस्य प्रथमदिनाङ्के हैटिदेशः स्वातन्त्र्यम् उद्घुष्टवान्।

१९१५ तमे वर्षे हैटि अमेरिकादेशस्य अधीनम् अभवत्। विंशतिं वर्षाणि यावत् अमेरिकायाः अधीने एव आसीत् हैटि। अनन्तरं विद्रोहः जातः। १९५७ तमे वर्षे डा॥ फ्राङ्कोयस् डुवालियर् अधिकारपदवीं स्वीकृतवान्। तस्य मरणानन्तरं तस्य पुत्रः जिन्क्लाड् डुवालियर् अधिकारं स्वीकृतवान्। १९८६ तमे वर्षे जिन्क्लाड्वर्येण देशं त्यक्त्वा गन्तव्यम् आपतितम्। 'प्रजाप्रभुत्वपद्धतिम् अनुसरोमि' इति वाग्दानं कृतवान् सैन्याधिकारी लेफ्टिनेण्ट् जनरल् नाम्फिवर्यः वचनभ्रष्टः जातः इति कारणतः १९८८ तमे वर्षे सः स्वपदवीतः च्युतः जातः। षण्मासानन्तरं विद्रोहकारणतः पुनरपि अधिकारपदवीं प्राप्य पुनः पदवीतः च्युतः अभवत्।

अनन्तरकाले प्रजाप्रभुत्वं तु जातम्। किन्तु अधिकारः सैनिकानाम् एव आसीत्।

जिन् बेर्ट्रेण्ड् अरिस्टैड्वर्यः पोर्ट् आफ् शाल्यूट्नामके कुटुम्बे जन्म प्राप्तवान्। बाल्ये एव पितृवियोगं प्राप्य सः मात्रा सह राजधानीं पोर्ट् आफ् प्रिन्स्नगरं गत्वा, तत्र क्याथोलिक्पाठशालायाम् अध्ययनं कृतवान्। अतः एव सः दारिद्र्यस्य स्वरूपं ज्ञातुं शक्तवान्। सः १९८० तमे वर्षे यद्यपि मतप्रचारकः जातः, तथापि सः दरिद्रैः सह एव कुटीरे निवासं करोति स्म। अतः अरिस्टैड्विषये जनानाम् आदरः विश्वासः च उत्पन्नौ। प्रजाः अरिस्टैड्वर्येण सह डुवालियर्सर्वकारविरुद्धम् आन्दोलनं घोषितवत्यः। डुवालियर्सर्वकारं सम्मुखीकृतवान् प्रथमः हैटिनायकः अरिस्टैड्वर्यः। १९८६ तमे वर्षे डुवालियर्सर्वकारस्य उच्चाटनानन्तरम् अपि अरिस्टैड्वर्यः प्रजाप्रभुत्वसर्वकारनिर्माणार्थं प्रयतमानः एव आसीत्। सर्वकारं विरुध्य क्रियमाणेन तस्य कार्येण क्रैस्तसंस्थाः कुपिताः अभवन्। अतः चर्च्संस्थाः क्याथोलिक्समाजतः तं बहिष्कृतवत्यः। अरिस्टैड् जातिकलहम् उत्पादयन् अस्ति इति ताः तस्य निन्दनं कृतवत्यः। १९९० तमे वर्षे यदा निर्वाचनं घोषितम् अभवत्, तदा अरिस्टैड्वर्यः चिन्तितवान् यत् - स्वच्छन्दवातावरणे प्रचलत् एतत् निर्वाचनं न्यायरीत्या न भवेत्। अतः एतस्मात् निर्वाचनतः अहं दूरे तिष्ठामि इति। किन्तु सः अन्तिमक्षणे निर्वाचने अभ्यर्थिरूपेण भागं गृहीत्वा बहुमतं प्राप्य जयं प्राप्तवान्। प्रेसिडेण्ट् अरिस्टैड्वर्यः वामपन्थीयभावनाः पुरस्करोति इति प्रतीतिः। अतः हैटिदेशस्य दरिद्राणां उद्धारसिद्धान्तः कार्यवैखरी च अमेरिकादेशस्य इष्टाय न अभवत्। केचन प्रजाप्रभुत्वविरोधिनः सैनिकसाहाय्येन अरिस्टैड्वर्यम् अधिकारस्थानात् च्यावयितुं बहुकालात् प्रयत्नं कुर्वन्तः १९९१ तमे वर्षे अरिस्टैड्वर्यम् अधिकारस्थानात् च्यावितवन्तः। अनन्तरं च सैनिकानाम् एव अधिकारः व्यवहारे आगतः। तदारभ्य सैनिक-सर्वकारविरुद्धं प्रजाप्रभुत्वस्य पुनरुद्धारार्थम् अमेरिकादेशेन बहवः यत्नाः कृताः। सैनिकाधिकारिणाम् अङ्गीकारणार्थं सामदानमार्गयोः अनुसरणं कृतम् अपि।




अमेरिकादेशस्य अध्यक्षः बिल् क्लिण्टन्वर्यः हैटिसैनिकाधिकारिभ्यः सूचनां प्रेषितवान् यत् - सप्टेम्बर् १५ दिनाङ्कानन्तरं हैटिदेशस्य आक्रमणं क्रियते अस्माभिः इति। तस्मिन् काले अमेरिकादेशे प्रवासं कुर्वन् आसीत् अरिस्टैड्वर्यः। सः बिल् क्लिण्टन्वर्याय, इतरदेशानां नायकेभ्यः च स्वसहकारं सूचितवान्।

सप्टेम्बर् १९ तमे दिनाङ्के अमेरिकादेशस्य केचन सैनिकाः हैटिनगरं गतवन्तः। तस्मात् भीताः बहवः जनाः देशं त्यक्त्वा गतवन्तः। अन्तिमक्षणे लेफ्टिनेण्ट् जनरल् सिड्रास्वर्यः 'स्वकीये अधिकारावधौ ये अनाचाराः प्रवृत्ताः, तद्विषये दण्डनं किमपि न दातव्यम् इति आश्वासनं स्वीकृत्य अधिकारपदवीं त्यक्तुं सिद्धः जातः।

विमानयानेन अरिस्टैड्वर्यः यदा हैटिराजधानीम् आगतवान्, तदा तत्रत्याः जनाः स्फोटकस्फोटनपूर्वकं तस्य स्वागतं कृतवन्तः। अनन्तरम् अरिस्टैड्वर्यः उक्तवान् - ''शान्तिपालनार्थम् अस्माभिः सह सहकृतवते अमेरिकादेशाय अस्माकं देशस्य प्रतिनिधीभूय अहं कृतज्ञतां समर्पयामि'' इति।





# उभौ अहङ्कारिणौ

सुमन्तदेशस्य राजकुमारी भानुमती अतीव सुन्दरी। किन्तु तस्याः महान् अहङ्कारः । सा अनेकविधाः विद्याः जानाति। बहुषु विषयेषु परिणता अपि सा।

भानुमत्याः पिता महाराजः चिन्तयति स्म - पुत्र्यां भानुमत्याम् अहङ्कारगुणः यदि न स्यात्, तर्हि एषा परिपूर्णा अभविष्यत् इति। किन्तु भानुमत्याः अहम्भावः तु दिने दिने वर्धते स्म।

एवं सति प्रतिवेशिराज्यस्य युवराजः पद्मसेनः सुन्दरीं भानुमतीं परिणेतुम् इच्छन् विवाहनिश्चयार्थं भानुमत्याः पित्रे एकं पत्रं लिखितवान् । एतं विषयं महाराजः पुत्रीं निवेदितवान्।

तदा भानुमती उक्तवती - ''विवाहविषये मम अभिप्रायम् अपृष्ट्वा एव निर्णयं कृतवन्तम् अहङ्कारिणं पद्मसेनं परिणेतुम् अहं न इच्छामि'' इति।

पुत्र्याः अभिप्रायं श्रुत्वा महाराजः - ''पद्मसेनस्य सैन्यबलं महत् अस्ति । यदि एषः विवाहः अस्माभिः न अङ्गीक्रियते, तर्हि सः अस्माकं राज्यस्य उपरि आक्रमणं कुर्यात् अपि । अतः भवती एतं विवाहम् अङ्गीकरोतु'' इति बहुधा पुत्रीं बोधितवान्।

किन्तु भानुमती पितुः वचनं न अङ्गीकृतवती। अपि तु सा पितरम् उक्तवती यत् - एतस्मिन् विषये यदि भवान् अनुरोधं करोति, तर्हि अहम् आत्महत्यां करोमि इति।

पुत्र्याः एतत् वचनं श्रुत्वा महाराजः चिन्तामग्नः।

प्रदीपनामकः महापण्डितः महाराजस्य दर्शनार्थं कदाचित् राजभवनं गतवान् । प्रदीपः बहूनां राजकुटुम्बानां गुरुः । राजा श्रद्धया प्रदीपं स्वागतीकृत्य स्वसमस्यां प्रदीपं



निवेदितवान्।

अनन्तरं प्रदीपः भानुमतीम् आहूय उक्तवान् - ''वत्से! दिनचतुष्टयात् पूर्वम् अहं पद्मसेनं दृष्टवान्। तस्मिन् अहम्भावस्य लेशः अपि नास्ति। अतीव विनयवान् सः भवत्याः सौन्दर्यं पाण्डित्यं च श्रुत्वा भवतीं परिणेतुम् इच्छन् स्ववंशस्य सम्प्रदायानुसारं भवत्याः पित्रे पत्रं लिखितवान्। एतावता एव सः अहङ्कारी इति न चिन्तनीयम्। सः भवत्याः अनुरूपः वरः। भवत्याः विषये पद्मसेनस्य महत् गौरवम् अस्ति। यदि भवती विना कारणं तं तिरस्करोति, तर्हि सः अहङ्कारी भवेत् अपि'' इति।

तदा भानुमती कोपेन उक्तवती - ''तस्मात् मम किमपि भयं नास्ति। मम निराकरणम् अद्य एव पद्मसेनं सूचयामि'' इति।

भानुमत्याः उद्वेगं दृष्ट्वा प्रदीपः मन्दहासपूर्वकम् उक्तवान् - ''वत्से! उद्वेगः मास्तु। पद्मसेनस्य गृहे महाराजस्य अपेक्षया अपि महाराज्ञ्याः एव गौरवम् अधिकम्। एतादृशः उत्तमः राजकुमारः भवत्या पुनः न प्राप्येत। अतः अहं कञ्चित् उपायं वदामि, शृणोतु। भवती काञ्चित् सखीं स्वीकृत्य मम आश्रमम् आगच्छतु। पद्मसेनस्य अपि आश्रमं प्रति आगमनं व्यवस्थापयामि अहम्। तत्र भवतोः परस्परम् अवगमनार्थम् अवकाशः भविष्यति। तदा अपि यदि पद्मसेनः भवत्याः इष्टाय न भवति, तर्हि भवती तं तिरस्कर्तुम् अर्हति'' इति।

एषः उपायः भानुमत्यै अरोचत। सा माधवीनामिकया सख्या सह प्रदीपस्य आश्रमं गतवती। दिनद्वयानन्तरं प्रदीपस्य आह्वानं पुरस्कृत्य पद्मसेनः प्रदीपस्य आश्रमम् आगतवान्। प्रदीपः पद्मसेनं सूचितवान् - ''राजकुमारी भानुमती मम आश्रमे अस्ति। भवान् तया सह सम्भाषणं कर्तुम् इच्छति चेत् करोतु'' इति।

आश्रमस्य बहिर्भागे भानुमती माधवी च उपविष्टवत्यौ आस्ताम्। प्रदीपस्य सूचनानुसारं भानुमती राजकुमार्याः इव माधव्याः अलङ्कारं कृतवती आसीत्। सामान्यवेषधारिणी भानुमती सखी इव दृश्यते स्म।

तस्मिन् समये तत्र आगतः पद्मसेनः

अलङ्कृतां माधवीं दृष्ट्वा 'एषा एव राजकुमारी' इति चिन्तितवान् । तस्याः सौन्दर्येण व्यामुग्धः सः ताम् उक्तवान् - ''एतावत्पर्यन्तम् अपि भवत्याः विषये अहं श्रुतवान्, न तु भवतीं दृष्टवान् आसम्। भवती लज्जां विना मां पश्यतु । यदि भवती अपि माम् इच्छति, तर्हि एव विवाहः । यतः भवत्याः सौन्दर्यं दृष्ट्वा मयि सन्देहः उत्पन्नः अस्ति - 'अहं भवत्याः अनुरूपः न' इति'' इति।

पार्श्वे एव उपविष्टवतीम् अपि माम् उपेक्ष्य माधव्या सह सम्भाषमाणः अस्ति पद्मसेनः इति चिन्तयन्ती भानुमती अतीव खिन्ना। सा अनुक्षणं ततः उत्थाय गतवती।

तावता आश्रमतः बहिः आगच्छन् प्रदीपः भानुमतीं दृष्ट्वा आश्चर्येण पृष्टवान् - ''किमिदम् ? भवती एकाकिनी कुत्र गच्छति ? पद्मसेनः कुत्र ?'' इति।

तदा भानुमती खेदेन उक्तवती - ''राजकुमारः पद्मसेनः चिन्तितवान् अस्ति - 'माधवी एव राजकुमारी' इति । पार्श्वे एव उपविष्टवतीं माम् उपेक्ष्य माधव्याः सौन्दर्यस्य प्रशंसां कुर्वन् अस्ति सः'' इति।

''एवं वा ? वस्तुतः माधवीं भवतीं च दृष्ट्वा अहम् अपि चिन्तितवान् - भवत्याः अपेक्षया माधवी एव सुन्दरी इति'' इति उक्तवान् प्रदीपः।

एतत् श्रुत्वा भानुमती कोपेन उक्तवती - ''एतत् सर्वम् अलङ्कारस्य प्रभावः'' इति।

तदा प्रदीपः उक्तवान् - ''एवं तर्हि सौन्दर्यम् अलङ्काराश्रितम् इति तु सिद्धम् । एवं सत्यपि काश्चन स्वसौन्दर्यविषये





दुरभिमानं प्रदर्शयन्ति। एतत् किमर्थम् इति मया न ज्ञायते'' इति।

प्रदीपस्य वचनं श्रुत्वा भानुमती अभिमानपूर्वकम् उक्तवती - ''सौन्दर्य-वर्धकः अलङ्कारः राजकुटुम्बेषु केवलं शक्यः। राजकुटुम्बे जन्मप्राप्तिः तु पूर्वजन्मनः पुण्यस्य फलम् एव। तादृशः अवकाशः सर्वैः न प्राप्यते खलु!'' इति।

एतत् श्रुत्वा प्रदीपः उच्चैः हसन् उक्तवान् - ''इदानीं पद्मसेनः माधवीं परिणेष्यति चेत् सा राजकुटुम्बम् एव प्राप्नोति किल!'' इति।

तदा क्षणकालं विचिन्त्य भानुमती उक्तवती - ''हन्त! मया दोषः कृतः। इदानीम् एव गत्वा वस्तुस्थितिं पद्मसेनं निवेदयामि'' इति।

तदा प्रदीपः - ''इदानीं भवती गत्वा वस्तुस्थितिं यदि पद्मसेनं वदति, तर्हि सः कुपितः भवेत्। कपटम् आचरितवती भवती इति सः खिन्नः भवेत्। अतः वस्तुस्थितिम् अहम् एव वदिष्यामि। आगच्छतु मया सह'' इति वदन् पद्मसेनसमीपं गतवान्। तस्मिन् समये पद्मसेनः माधवीं पृच्छन् आसीत् - ''एतावत्पर्यन्तम् अहम् एव सम्भाषणं कृतवान्। भवती एकं वाक्यम् अपि न उक्तवती, किमर्थम्?'' इति।

तदा तत्र गतः प्रदीपः उक्तवान् - ''पद्मसेन! सा राजकुमारी न। राजकुमार्याः सखी माधवी। राजकुमारी अत्र मम पार्श्वे अस्ति'' इति।

एतत् श्रुत्वा दिग्भ्रान्तः पद्मसेनः भानुमतीं दृष्टवान्। सामान्यवेषधारिणी सा शिरः अवनमय्य स्थितवती आसीत्।

एतस्मात् खिन्नः पद्मसेनः पृष्टवान् - ''किमिदं नाटकम्?'' इति।

तदा प्रदीपः उक्तवान् - ''अत्र नाटकं किमपि नास्ति। सखी माधवी राजकुमारीम् इव आत्मानम् अलङ्कर्तुम् इष्टवती। अन्तःपुरे सखी यदि राजकुमारीम् इव आत्मानम् अलङ्करोति, तर्हि महाराजः कुपितः भवति। अतः सख्याः माधव्याः आशयं पूरयितुम् इच्छन्ती भानुमती मम आश्रमम् आगत्य माधव्याः अलङ्कारं कृतवती। राजकुमारी मम आश्रमे एव अस्ति इति अहं भवन्तं सूचितवान्। भवान् तु अत्र आगत्य

सामान्यवेषधारिणीं राजकुमारीं भानुमतीं न अभिज्ञातवान्, अपि तु सखीं माधवीम् एव राजकुमारीं चिन्तितवान् । एवं सत्यपि भवान् पृच्छन् अस्ति - 'किमिदं नाटकम्' इति'' इति।

एतत् श्रुत्वा पद्मसेनः खेदेन उक्तवान् - ''माधव्या सह मम सम्भाषणारम्भसमये यदि अहं सूचितः स्यां, तर्हि अहम् उपहासपात्रं न अभविष्यं खलु !'' इति।

तदा प्रदीपः उक्तवान् - ''भवान् अत्र आगच्छति इति विषयं वस्तुतः भानुमती न जानाति। अकस्मात् अत्र आगतं भवन्तं दृष्ट्वा सा सम्भ्रमेण आश्रमस्य अन्तः गतवती । निरन्तरं सम्भाषमाणस्य भवतः सम्मुखीकरणं कथम् इति अजानती माधवी किङ्कर्तव्यतामूढा अभवत् । सकलविद्यासु पारङ्गतां राजकुमारीम् अभिज्ञातुम् अशक्तः भवान् केवलसौन्दर्यदर्शनेन एव व्यामुग्धः सञ्जातः । अत्र कस्यापि दोषः नास्ति'' इति।

महापण्डितस्य प्रदीपस्य वचनं श्रुत्वा अपि पद्मसेनः न कुपितः, अपि तु स्वव्यवहारं परिशीलितवान् । अनन्तरं भानुमतीम् उद्दिश्य उक्तवान् - ''मादृशः श्रेष्ठः जगति एव नास्ति इति चिन्तयन् अहम् अहङ्कारी जातः अस्मि। भवत्याः अभिप्रायम् अपृष्ट्वा, भवत्याः पित्रे विवाहनिश्चयार्थं पत्रं लिखितवान् अहम् इति यत्, तत् तु मम दुरभिमानं द्योतयति। अहं भवत्याः अनुरूपः न। कृपया मां क्षाम्यतु'' इति।

''मम पित्रे लिखितं विषयं भवान् विस्मरति चेत् वरम्। यतः मदपेक्षया अपि



सौन्दर्यवती अस्ति माधवी । अतः सा एव भवतः अनुरूपा'' इति उक्तवती भानुमती।

एतत् श्रुत्वा पद्मसेनः उक्तवान् - ''राजकुमारीम् इव सखीम् अलङ्कृत्य, तस्याः पार्श्वे एव सामान्यवेषेण उपवेष्टुं सिद्धायाः भवत्याः विनयव्यवहारः असाधारणः एव । तस्मात् अहं भवत्याः योग्यः न'' इति।

तदा भानुमती किमपि वक्तुम् उद्युक्ता। तावता प्रदीपः उक्तवान् - ''भवन्तौ उभौ अपि परस्परम् अयोग्यौ इति चिन्तयन्तौ स्तः इति यत्, तेन ज्ञायते - भवतोः उभयोः अपि इदानीम् अहम्भावः नास्ति इति । भवन्तौ उभौ अपि परस्परं योग्यौ एव। इदानीं भवन्तौ स्वस्ववासस्थानं गन्तुम् अर्हतः । भवतोः विवाहार्थम् अहम् आगत्य आशीर्वादं करिष्यामि'' इति।

एतत् श्रुत्वा पद्मसेनः प्रदीपं नमस्कृत्य ततः गन्तुम् उद्युक्तः । किन्तु भानुमती अतृप्त्या एव प्रदीपम् उक्तवती - ''पद्मसेनः माधव्याः सौन्दर्यम् इष्टवान् । सः उक्तवान् यत् - मम विनयशीलता माधव्याः सौन्दर्यापेक्षया मूल्ययुता इति । किन्तु मम विनयशीलता तु न वास्तविकी । अविद्यमानम् अपि विनय- स्वभावं मयि आरोपितवान् भवान् । अतः पद्मसेनः माधवीम् एव परिणयेत्, न तु माम्'' इति।

तदा प्रदीपः वात्सल्येन भानुमत्याः शिरः आमृशन् उक्तवान् - ''वत्से ! भवत्याः विनयस्वभावम् इष्टवान् अस्ति पद्मसेनः। एवं सति विनयस्वभावस्य अभ्यसनं न कष्टाय भवत्याः। भवती माधव्याः विषये चिन्तां मा करोतु । नगररक्षणाधिकारिणा पद्मनागेन सह माधव्याः विवाहः निश्चितप्रायः। भवतीं पद्मसेनं च आदर्शदम्पती कर्तुम् एव भवन्तौ अत्र आहूतवान् अहम्'' इति।

एतत् श्रुत्वा भानुमती स्वदोषम् अवगत्य प्रदीपं भक्त्या नमस्कृतवती । अनन्तरकाले भानुमती सविनयं व्यवहरन्ती 'विनयशीला' इति ख्यातिं प्राप्तवती । एतेन सर्वेऽपि सन्तुष्टाः । अनन्तरं शुभे मुहूर्ते पद्मसेन-भानुमत्योः विवाहः सवैभवं सम्पन्नः।





# भुवनसुन्दरी - २

(ट्रायनगरस्य राजा वर्धनः मोहननामकं पुत्रं प्राप्तवान् । भाविनि काले मोहनः ट्रायनगरस्य हानिकारकः भविष्यति इति ज्ञात्वा राजा वर्धनः पुत्रस्य मारणार्थं स्वगोपालकम् आदिष्टवान् । किन्तु गोपालकः मोहनं न मारितवान्, अपि तु गृहं नीत्वा पोषितवान् । कदाचित् तिस्रः देवतास्त्रियः ऐडापर्वते स्थितं मोहनं प्रार्थितवत्यः यत् - अस्मासु तिसृषु सौन्दर्यवती का इति निर्णीय वदतु इति । कामिनीनामिकां, या भुवनसुन्दर्याः प्राप्त्यर्थं साहाय्यं करोमि इति आश्वासनं दत्तवती, ताम् एव सुन्दरीत्वेन निर्णीतवान् मोहनः । अनन्तरम् ...)

पुत्रं मोहनं मारयितुम् इच्छन् राजा वर्धनः यदा गोपालकम् आदिष्टवान्, तदनन्तरं मोहनस्य स्मरणार्थं प्रतिवर्षम् अपि ट्रायनगरे उत्सवम् आचरति स्म वर्धनः ।

मोहनः तिसृषु देवतासु कामिनी एव सौन्दर्यवती इति यदा निर्णीतवान्, ततः केषुचित् एव दिनेषु ट्रायनगरे उत्सवः सम्प्राप्तः । वर्धनस्य भटाः केचन ऐडापर्वतं गत्वा गोपालकं प्रार्थितवन्तः - "ट्रायनगरे प्रचलिष्यमाणस्य उत्सवस्य अङ्गतया स्पर्धाः प्रचलिष्यन्ति । तदर्थम् उत्तमम् एकं वृषभं प्रेषयतु कृपया" इति ।

मोहनेन एतादृशः उत्सवः कदापि न दृष्टः आसीत् इतःपूर्वम् । मोहनः स्पर्धाः द्रष्टुम् अतीव इच्छति स्म । अतः सः चिन्तितवान्- ट्रायनगरं गन्तव्यम् इति । ट्रायनगरं प्रति मोहनस्य गमनेन 'वर्धनस्य पुत्रः न मृतः, अपि तु जीवति' इति विषयः वर्धनेन ज्ञातः

भवेत्, तेन च सः कुपितः भवेत् इति भीतः गोपालकः मोहनं बहुधा उक्तवान् - 'ट्रायनगरं प्रति गमनं मास्तु' इति । किन्तु मोहनः 'मया गन्तव्यम् एव उत्सवार्थम्' इति दृढस्वरेण उक्तवान् । मोहनम् एकाकिनं प्रेषयितुम् अनिच्छन् गोपालकः स्वयम् अपि तेन सह ट्रायनगरं गतवान् ।

ट्रायनगरस्य स्मारकोत्सवे बहवः स्पर्धाः आसन् । तेषु मल्लयुद्धम् अपि अन्यतमम् । बहवः मल्लाः मल्लयुद्धं कुर्वन्ति स्म । तस्यां स्पर्धायां भागग्रहणार्थं सर्वेषाम् अपि अवकाशः आसीत् । मल्लयुद्धे यः जयं प्राप्नोति तस्मै अपूर्वं किरीटं पारितोषिकत्वेन दीयते स्म ।

गोपालकेन बहुधा निवार्यमाणः अपि मोहनः मल्लयुद्धे भागं गृह्णन् जयं सम्पादितवान् । किरीटं प्राप्तवान् च । धावनस्पर्धायाम् अपि भागं गृहीत्वा प्रथमं स्थानं प्राप्य अपरं किरीटं सम्पादितवान् सः । मोहनेन किरीटद्वयं प्राप्तम् इति कारणतः वर्धनस्य पुत्राः असूयाविष्टाः जाताः । कुलगोत्ररहितः मोहनः ततः उच्चाटनीयः इति विचिन्त्य वर्धनस्य पुत्राः मोहनं मल्लयुद्धार्थम् आहूतवन्तः । तत्रापि मोहनः एव जयं प्राप्य तृतीयं किरीटं सम्पादितवान् ।

एतस्मात् अपमानिताः वर्धनस्य पुत्राः चिन्तितवन्तः यत् - मोहनः मारणीयः इति । मोहनः क्रीडारङ्गात् बहिः यथा न गच्छेत्, तथा रक्षकभटाः आयोजिताः तैः । अनन्तरं वीरसिंहः अतिभयङ्करः च खड्गं गृहीत्वा मोहनस्य उपरि आक्रमणं कृतवन्तौ ।



आश्चर्यं नाम 'वयं त्रयः अपि सहोदराः' इति विषयं ते न जानन्ति स्म।

एतत् दृष्ट्वा अपायः सन्निहितः इति ज्ञात्वा गोपालकः भीत्या धावन् वर्धनस्य समीपं गत्वा उक्तवान् - ''महाराज ! मोहनः भवतः पुत्रः एव । मोहनस्य मारणार्थं भवता अहं पूर्वम् आदिष्टः चेदपि अहं तं न मारितवान् आसम् । इदानीं कृपया तं रक्षतु'' इति।

पुत्रः न मारितः इति ज्ञात्वा अपि महाराजः गोपालकविषये न कुपितः, अपि तु पुत्रः इदानीम् अपि जीवति इति महान्तं सन्तोषम् अनुभूतवान् राजा । पुत्रः पुनरपि स्वस्थानं प्राप्तवान् इति कारणतः सर्वेभ्यः भूरिभोजनव्यवस्थार्थं सेवकान् आज्ञापितवान् । अन्यपुत्राणाम् अपेक्षया अपि मोहनविषये महाराजस्य महान् अभिमानः।

ज्योतिषिकाः वर्धनं स्मारितवन्तः - ''महाराज ! मोहनं मारयतु । नो चेत् समग्रं ट्रायनगरं भस्मसात् भविष्यति'' इति।

तदा वर्धनः साभिमानम् उक्तवान् - ''एतादृशस्य सत्पुत्रस्य मारणापेक्षया ट्रायनगरस्य नाशः एव वरम्'' इति।

अनन्तरं मोहनः वर्धनस्य पुत्रेषु अन्यतमः सन् तैः सह वासम् आरब्धवान् । तस्य सर्वेषाम् अपि सहोदराणां विवाहः सम्पन्नः आसीत् । मोहनस्य सहोदराः सर्वे अपि पत्न्या सह जीवनं यापयन्ति स्म । कदाचित् ते मोहनम् उक्तवन्तः - ''भवान् अपि विवाहितः भवतु'' इति।

तदा मोहनः सहोदरान् उक्तवान् - ''मम अनुरूपां पत्नीं देवी कामिनी अन्विष्यति ।





कुर्मः, उत शान्तिसन्धानेन सुलोचनायाः आनयनार्थं प्रयत्नं कुर्मः' इति।

शान्तिमार्गः एव उत्तमः इति सभायां निर्णयः अभवत् । तदनुसारं ट्रायनगरतः दूताः ग्रीक्देशं गत्वा प्रार्थितवन्तः - "सुलोचनां प्रत्यर्पयन्तु" इति । किन्तु ग्रीक्देशीयाः एतत् न अङ्गीकृतवन्तः।

पुनरपि राजा वर्धनः मन्त्रिभिः सह समालोचनं कृतवान्। तस्मिन् समालोचने एवं चिन्तितम् - 'अस्मिन् सन्दर्भे ग्रीक्देशस्य उपरि आक्रमणं करणीयम्, तेन च सुलोचना प्राप्तव्या' इति।

तदा मोहनः पितरम् उक्तवान् - "एतस्य युद्धस्य प्रमुखत्वम् अहम् एव निर्वहामि । नौकाः सैन्यबलं च व्यवस्थापयतु। अहं युद्धं कृत्वा सुलोचनाम् आनेष्यामि । यदि सुलोचनाम् आनेतुं न शक्नोमि, तर्हि सुलोचनासदृशीं काञ्चित् ग्रीक्राजकुमारीं वा आनेष्यामि एव" इति।

महाराजः एतत् अङ्गीकृतवान्।

यतः देवी कामिनी मद्विषये प्रसन्ना अस्ति। अतः वध्वाः अन्वेषणार्थं मया प्रयत्नः करणीयः नास्ति" इति।

स्वभाविनी पत्नी भुवनसुन्दरी स्पार्टानगरे अस्ति इति मोहनः जानाति । अतः स्पार्टानगरं प्रति गमनं कदा भवेत् इति चिन्तयन् आसीत् सः। तदर्थम् अवकाशः अपि प्राप्तः।

महाराजस्य वर्धनस्य सुलोचनानामिका अनुजा आसीत् । किञ्चित्कालात्पूर्वं ग्रीक्देशीयाः सुलोचनाम् अपहृत्य नीतवन्तः आसन्।

एतस्याः घटनायाः अनन्तरं राजा मन्त्रिणां सभाम् आयोज्य तान् पृष्टवान् आसीत् - 'इदानीं ग्रीक्देशस्य आक्रमणं

तस्मिन् एव दिने भुवनसुन्दर्याः पतिः प्रतापः स्पार्टातः ट्रायनगरम् आगतवान् । अकस्मात् स्पार्टानगरे कश्चन साङ्क्रामिकरोगः आरब्धः आसीत् । ट्रायनगरस्थाभ्यः काभ्यश्चित् देवताभ्यः बलिं दत्त्वा महाकाल्याः कोपः शमनीयः इति उद्देशेन प्रतापः ट्रायनगरं प्रति आगतवान् आसीत्।

मोहनः प्रतापं सादरं सत्कृत्य तस्य स्नेहं सम्पादितवान् । अनन्तरं सः प्रतापम्

उक्तवान् - "मया अपि चिन्तितम् अस्ति - स्पार्टानगरं गत्वा तत्रत्याः देवताः आराध्य पुण्यसम्पादनं करणीयम् इति" इति।

मोहनस्य एतत् वचनं श्रुत्वा प्रतापः अतीव सन्तुष्टः।

मोहनस्य सूत्रानुसारं नौकाः सिद्धाः। नौकाद्वारा प्रतापः मोहनः च प्रस्थितौ। केषाञ्चित् दिनानाम् अनन्तरं तौ स्पार्टानगरं प्राप्तवन्तौ।

भुवनसुन्दरीनिमित्तं मोहनः बहूनि उपायनानि नीतवान् आसीत्। उपायनानि भुवनसुन्दर्यै दत्त्वा तस्याः गृहे एव अतिथित्वेन स्थितवान् मोहनः।

भुवनसुन्दरीसदृशी सुन्दरी अन्या कापि नास्ति जगति इति तस्याः दर्शनमात्रेण ज्ञातवान् मोहनः। कामिनीदेवतायाः अनुग्रहं प्राप्य कदा वा भुवनसुन्दरीं प्राप्नुयां, कदा वा तां ट्रायनगरं नयेयम्, कदा वा तां परिणीय तया सह जीवनं यापयेयम् इति चिन्तनम् आरब्धं मोहनस्य।

कामिनीदेवतायाः प्रभावेण भुवनसुन्दरी अपि मोहनस्य दर्शनमात्रेण तस्मिन् अनुरक्ता जाता। किन्तु सा मोहनविषयकम् अनुरागं पतितः गोपितवती।

प्रताप-भुवनसुन्दर्योः अतिथित्वेन मोहनः नव दिनानि यावत् तयोः गृहे स्थितवान्।

अत्रान्तरे प्रतापस्य पितामहः दिवङ्गतः। पितामहस्य अन्त्यसंस्कारार्थं प्रतापः क्रीट्द्वीपं गतवान्।



एतत्सर्वं कामिनीदेवतायाः प्रभावतः एव जातम् इति चिन्तितवान् मोहनः। सः आत्मना सह भुवनसुन्दरीं ट्रायनगरं नेतुं तां सुलभतया अङ्गीकारितवान्।

प्रतापः यस्मिन् दिने क्रीट्द्वीपं प्रति प्रस्थितवान्, तस्मिन् एव दिने मोहनः भुवनसुन्दरी च रहस्येन नौकाद्वारा ट्रायनगरं प्रति प्रस्थितवन्तौ। मोहनः ट्रायनगरं प्रति गमनसमये बहुषु द्वीपेषु कानिचन दिनानि तिष्ठन् बहुदिनपर्यन्तं ट्रायनगरं न प्राप्तवान् एव।

तावता प्रतापः पितापमहस्य अन्त्यसंस्कारादिकं समाप्य गृहं प्रति आगतवान्।

अतिथित्वेन आगतस्य मोहनस्य वञ्चनां

ज्ञात्वा अतीव कुपितः सः अग्रजसमीपं गत्वा आवेशेन उक्तवान् - "मोहनः वञ्चनाम् आचरितवान् अस्ति । मम अनुपस्थितौ सः मम पत्नीं भुवनसुन्दरीम् अपहृत्य गतवान् अस्ति । अतः ट्रायनगरस्य उपरि आक्रमणार्थं युद्धसिद्धतां करोतु" इति ।

तदा प्रतापस्य अग्रजः उक्तवान् - "त्वरा मास्तु । अहं ट्रायनगरं प्रति कञ्चित् दूतं सम्प्रेष्य भवतः पत्नीं भुवनसुन्दरीं, भवतः अपमानस्य परिहारं च आनायामि । यदि अस्माकं वचनं ते न अङ्गीकुर्वन्ति, तर्हि युद्धम् अस्ति एव" इति ।

प्रतापः एतत् अङ्गीकृतवान् ।

प्रतापस्य अग्रजेन प्रेषिताः दूताः ट्रायनगरं प्राप्तवन्तः । तावता अपि मोहनः भुवनसुन्दर्या सह ट्रायनगरं न प्राप्तवान् आसीत् । अतः दूतैः कृते मोहनविषयके दोषारोपणे वर्धनः न विश्वसितवान्, अपि तु सः दूतान् उद्दिश्य - "अहं कमपि विषयं न जानामि । मम पुत्रः अकस्मात् भवतां राजकुमारीम् अपहृत्य गतवान् चेदपि मया परिहारदानस्य आवश्यकता तु नास्ति । यतः मम भगिनी सुलोचना अपहृता खलु भवद्भिः ? तस्मात् ग्रीक्जनाः परिहारं न दत्तवन्तः खलु !" इति तर्जनस्वरेण पृष्टवान् ।

शान्तिसन्धानार्थम् आगताः दूताः तथैव प्रतिप्रेषिताः इति विषये कापि चिन्ता नासीत् वर्धनस्य । तस्मिन् समये सर्वम् अपि सम्मुखीकर्तुं सिद्धः आसीत् वर्धनः । केषाञ्चित् दिनानाम् अनन्तरं मोहनः भुवनसुन्दर्या सह ट्रायनगरम् आगतवान् । अनुपमसुन्दरी भुवनसुन्दरी ट्रायनगरम् आगतवती इति ट्रायनगरस्य जनाः सर्वे अपि अतीव सन्तुष्टाः ।

अनन्तरं केषुचित् एव दिनेषु शुभे मुहूर्ते मोहन-भुवनसुन्दर्योः विवाहः वैभवेन सम्पन्नः ।

तस्मिन् सन्दर्भे वर्धनः प्रतिज्ञां कृतवान् यत् - ग्रीक्जनाः सहस्रं वर्षाणि यावत् तपः आचरन्ति चेदपि अहं भुवनसुन्दरीं न प्रत्यर्पयामि इति । (अनुवर्तते)



# र स वा र्ताः

## प्रथमं दण्डनम्, अनन्तरं सम्माननम्

प्रपञ्चे एव अत्यन्तं लघुतमः देशः वाटिकन् नगरम्। तस्य नगरस्य प्रथमः पौरः पोप्वर्यः सद्यः एव इटलीदेशस्य सुप्रसिद्ध- खगोलशास्त्रज्ञस्य गेलिलियो गेलिलियवर्यस्य स्मरणार्थं मूल्याङ्कद्वयं विमोचितवान्। एषः विषयः न केवलं मूल्याङ्कसङ्ग्रहणकर्तॄणाम् आसक्तिजनकः विषयः, अपि तु ये इतिहासस्य अध्ययने आसक्ताः, तेषाम् अपि आसक्तिजनकः विषयः। यतः रोमन् क्याथोलिक् क्रैस्तसंस्था गेलिलियोवर्यम आजीवकारागृहवासेन दण्डितवती आसीत्। अत्र कारणं सूर्यमण्डलस्य भूमिः एव केन्द्रम् इति विश्वस्य रोमन्क्याथोलिक्संस्था तथैव प्रचारम् अपि कुर्वती आसीत्। किन्तु गेलिलियोवर्यः 'सौरमण्डलस्य केन्द्रं




न भूमिः, अपि तु सूर्यः। भूमिः सूर्यं परितः भ्रमति' इति संशोधनं कृत्वा, तत् प्रकटितवान्। एतत् सोढुम् अशक्ता क्याथोलिक्संस्था 'तेन निरूपितः सिद्धान्तः आधाररहितः इति गेलिलियोवर्येण अङ्गीकरणीयम्' इति अनुरोधम् अकरोत्। किन्तु गेलिलियो एतत् न अङ्गीकृतवान्। अतः रोमन् क्याथोलिक् संस्था १६३३ तमे वर्षे आजीवकारागृहवासेन गेलिलियोवर्यम् अदण्डयत्। गेलिलियोवर्यः १६४२ तमे वर्षे दिवङ्गतः। मरणपर्यन्तम् अपि सः अष्ट वर्षाणि यावत् कारागृहवासम् अनुभूतवान्। बहुकालानन्तरं गेलिलियो- वर्येण अन्विष्टं सिद्धान्तं विज्ञानिनः अङ्गीकृतवन्तः। अतः गेलिलियोवर्यस्य मरणस्य ३५० वर्षाणाम् अनन्तरं वाटिकननगरं मृतस्य गेलिलियोवर्यस्य सम्माननम् अकरोत्।

## मानवस्य समीपबन्धुः

शिलारूपेण दृश्यमानः कश्चन दन्तः सद्यः काले दृष्टिगोचरः जातः अस्ति। एषः दन्तः चिम्पाञ्जिमृगस्य स्यात् इति विज्ञानिनः चिन्तयन्तः



सन्ति। एषः मानवकपिः सामान्यतः ४,४००,००० वर्षेभ्यः पूर्वम् आफ्रिकादेशस्य इथियोपियारण्येषु सञ्चरति स्म इति विज्ञानिनः अभिप्रयन्ति। क्यालिफोर्निया-विश्वविद्यालयस्य टिम्वैट् वदति यत् - एतादृशे अरण्यवातावरणे ऐदम्प्राथम्येन चिम्पाञ्जिमृगः दृष्टिगोचरः जातः अस्ति इति। तस्य संशोधनानुसारं सः अभिप्रैति यत् - एतस्य चिम्पाञ्जिमृगस्य मानवस्य च महत् साम्यम् अस्ति इति। सः वदति यत् गोरिल्ला-मानवयोः यत् साम्यम् अस्ति ततोऽपि अधिकं साम्यम् अस्ति चिम्पाञ्जि-मानवयोः इति।



# वञ्चकः मन्त्रवादी

दृढव्रतः त्रिविक्रमः पुनरपि वृक्षसमीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्, मौनं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - "अये राजन् ! भवतः अपारा शक्तिः, दृढनिश्चयः च प्रशंसार्हः एव । किन्तु अहं चिन्तयामि यत् - एतादृशं क्षुद्रं कार्यं प्रति भवन्तं यः प्रेरितवान् सः कश्चित् मन्त्रवादी एव स्यात् इति । यदि एतत् सत्यं स्यात्, तर्हि भवान् निश्चयेन महत् दुःखम् अनुभविष्यति । दुःखं सोढुम् अशक्तः भवान् अविवेकेन अकार्याणि अपि कुर्यात् । अतः एतद्विषये जागरूकः भवतु भवान् इति भवन्तं स्मारयितुम् इच्छामि । एतस्य उदाहरणार्थं राजकुमारस्य अनङ्गवर्मणः कथां श्रावयामि, यश्च कस्यचित् मन्त्रवादिनः वचने विश्वस्य महत् कष्टम् अनभूतवान् । तां कथां श्रद्धया शृणोतु

वेतालकथा



तावत्, येन भवतः मार्गायासः परिहृतः स्यात्'' इति।

अनन्तरं वेतालेन कथा आरब्धा -

राजा अग्निवर्मा प्रभातनगरं पालयति स्म । तस्य एकमात्रपुत्रः अनङ्गवर्मा । अग्निवर्मा चिन्तितवान् यत् - पुत्रस्य पट्टाभिषेकं कारयित्वा प्रतिवेशिराज्यस्य उदयगिरेः राजकुमारी मालविका स्नुषात्वेन स्वीकरणीया इति।

एवं स्थिते कदाचित् अनङ्गवर्मा कैश्चित् भटैः सह मृगयार्थम् अरण्यं गतवान् । मध्याह्नपर्यन्तम् अपि अरण्ये मृगयां कृत्वा अतीव श्रान्तः अनङ्गवर्मा समीपस्थस्य तटाकस्य जलं पीत्वा विश्रान्त्यर्थं वृक्षस्य अधः उपविष्टवान् । तावता पार्श्वे एव स्थितात् पर्वतप्रदेशात् कस्यचन आर्तनादः श्रुतः अनङ्गवर्मणा। अनुक्षणं सः कोषतः खड्गं स्वीकृत्य आर्तनादम् अनुसृत्य गतवान्।

आर्तनादः कस्याश्चित् गुहातः श्रूयते स्म। अनङ्गवर्मा तां गुहां प्रविष्टवान्। गुहायां कश्चन तैलदीपः ज्वलति स्म। दीपस्य पार्श्वे एव कृष्णाजिनस्य उपरि पद्मासनस्थितौ उपविष्टः संन्यासिवेषधारी कश्चित् वृद्धः ऊर्ध्वश्वासं कुर्वन् मरणावस्थायाम् आसीत्।

संन्यासी अनङ्गवर्माणं दृष्ट्वा - ''वत्स ! अनङ्ग ! भवान् युक्ते समये आगतवान् अस्ति । मम जीवनस्य अन्तिमकालः सन्निहितः अस्ति। अहं परकायप्रवेशविद्यां जानामि । परकायप्रवेशविद्या नाम असाधारणी एव । अपि च सामान्यैः अवगन्तुम् अशक्या अपि। मम मरणात्पूर्वम् एतां विद्यां कश्चित् श्रेष्ठं पुरुषं बोधयितुम् इच्छामि अहम् । परकायप्रवेशमन्त्रं भवन्तं बोधयामि । श्रद्धया शृणोतु'' इति उक्त्वा त्रिवारं मन्त्रम् उच्चारितवान् । अनन्तरं च पुनः अनङ्गवर्माणम् उक्तवान् - ''वत्स! एषः मन्त्रः त्रिवारं स्पष्टम् उच्चारणीयः। उच्चारणसमये एकम् अक्षरम् अपि व्यत्यस्तं न भवेत्। मन्त्रं स्मरति खलु ! इदानीं भवान् मया बोधितं मन्त्रम् उच्चार्य भवतः शरीरं परित्यज्य मम शरीरं प्रविशतु। अहम् अपि मम आत्मानं परित्यज्य मम शरीरं प्रवेष्टुं भवते अवकाशं कल्पयिष्यामि'' इति।

अनङ्गवर्मा सन्तोषेण संन्यासिनः वचनम् अङ्गीकृतवान् । अनन्तरं च संन्यासिना

बोधितं मन्त्रं त्रिवारम् उच्चारितवान् । अपरक्षणे एव अनङ्गवर्मणः आत्मा शरीरात् पृथग्भूतः । तस्मिन् एव समये संन्यासी अपि परकायप्रवेशमन्त्रम् उच्चारितवान् इति कारणतः तस्य आत्मा अपि शरीरात् पृथग्भूय अनङ्गवर्मणः शरीरं प्रविष्टवान् । अनङ्गवर्मणः आत्मा संन्यासिनः शरीरं प्रविष्टवान् ।

संन्यासिनः वृद्धशरीरम् अतीव भारायते स्म अनङ्गवर्मणः । शरीरभारं वोढुं कष्टम् अनुभवति स्म अनङ्गवर्मा । युवराजरूपं धृतवान् संन्यासी तु अतीव सन्तुष्टः आसीत् ।

किञ्चित्कालानन्तरम् अनङ्गवर्मा संन्यासिनं नमस्कुर्वन् उक्तवान् - "महानुभाव ! परकायप्रवेशविद्यादानपूर्वकं मां बहुधा उपकृतवान् भवान् । एतस्य प्रत्युपकारं कदाचित् कुर्याम् अहम् । गुहायाः बहिः मम भटाः माम् एव प्रतीक्षमाणाः सन्ति । अतः कृपया भवान् भवदीयं शरीरं प्रविशतु । अहम् अपि मम शरीरं प्रविशामि" इति ।

एतत् श्रुत्वा अनङ्गवर्मरूपधारी मन्त्रवादी उच्चैः हसन् - "भवान् एव स्वयम् आगत्य मम जाले पतितः अस्ति । प्रभातनगरस्य महाराजपदवी प्राप्तव्या इति बहोः कालात् मम इच्छा आसीत् । सा इच्छा इदानीं पूर्णा जाता । अद्य आरभ्य अहम् एव अनङ्गवर्मा । अहम् एव प्रभातनगरस्य सिंहासनस्य उत्तराधिकारी । प्रभातनगरस्य युवराजः अहम् उदयगिरेः राजकुमारीं मालविकां



परिणेष्यामि" इति वदन् गुहातः बहिः गतवान् ।

मन्त्रवादी मां वञ्चितवान् इति ज्ञात्वा संन्यासिरूपधारी अनङ्गवर्मा अतीव खिन्नः । सः मन्दम् उत्थाय यावत् गुहातः बहिः गतवान्, तावता अनङ्गवर्मरूपी मन्त्रवादी भटाः च अश्वम् आरुह्य राजधानीं प्रति गच्छन्तः आसन् ।

कथमपि मया शीघ्रातिशीघ्रं राजधानी प्राप्तव्या इति निश्चित्य अनङ्गवर्मा ततः प्रस्थितवान् । सः किञ्चिद्दूरं यदा गतवान्, तदा अतीव श्रान्त्या कस्यचित् वृक्षस्य अधः उपविष्टवान् । वृक्षस्य पार्श्वे कश्चित् मयूरः मृतः आसीत् । अनङ्गवर्मा क्षणकालं चिन्तितवान् यत् - मयूरस्य शरीरस्य प्रवेशं



कृत्वा राजधानी प्राप्नोमि इति । किन्तु अपरक्षणे एव तां चिन्तां परित्यक्तवान् अनङ्गवर्मा ।

तावता अश्वारूढः कश्चित् तेन मार्गेण आगतवान् । संन्यासिवेषधारी अनङ्गवर्मा अश्वारोहिणं प्रार्थितवान् - "मां प्रभातनगरं नयतु" इति । अनङ्गवर्मणः प्रार्थनां सन्तोषेण अङ्गीकृत्य अश्वारोही तम् अश्वस्य उपरि उपवेश्य प्रभातनगरं नीतवान् । प्रभातनगरस्य सीमा यदा प्राप्ता, तदा अनङ्गवर्मा अश्वारोहिणे कृतज्ञतां समर्प्य ततः गतवान् ।

इदानीं किं करोमि इति यावत् अनङ्गवर्मा चिन्तयन् आसीत्, तावता शवम् उन्नीय गच्छन्तः केचन जनाः दृष्टाः अनङ्गवर्मणा । ते जनाः शवं अनतिदूरस्थं श्मशानं नीत्वा अवतारितवन्तः । संन्यासिवेषधारी अनङ्गवर्मा चिन्तितवान् यत् - सः शवः कस्यचित् युवकस्य इति ।

अनुक्षणम् अनङ्गवर्मा परकायप्रवेशमन्त्रं त्रिवारम् उच्चारितवान्, संन्यासिशरीरं परित्यज्य युवकस्य शवं प्रविष्टवान् च । शवः अनुक्षणम् उत्थाय चितायाः उपरि उपविष्टवान् । एतत् दृष्ट्वा तत्रत्याः जनाः - "हा हन्त ! एषः मूकः रामः पिशाचः सञ्जातः" इति वदन्तः भीत्या ततः पलायितवन्तः ।

महता कष्टेन परकायप्रवेशं कृत्वा प्राप्तं शरीरं कस्यचित् मूकस्य इति ज्ञात्वा अनङ्गवर्मा अतीव दुःखितः अभवत् । किञ्चित्कालानन्तरम् आत्मानं निगृह्य अनङ्गवर्मा स्वाङ्गुल्यां विद्यमानं सुवर्णाङ्गुलीयकं दृष्ट्वा अतीव सन्तुष्टः । अनन्तरं सः तत् अङ्गुलीयकं आभरणानाम् आपणे विक्रीय प्राप्तेन धनेन एकम् अश्वं क्रीतवान् । अश्वारूढः सन् सः राजकुमार्याः मालविकायाः राज्यम् उदयगिरिं गतवान् ।

अनङ्गवर्मा उदयगिरेः दुर्गस्य रक्षकभटान् अभिनयद्वारा सूचितवान् यत् - अहं महाराजं द्रष्टुम् इच्छामि इति । रक्षकभटाः अनङ्गवर्मणः भावं ज्ञात्वा तं महाराजस्य रणवर्मणः समीपं नीतवन्तः ।

तस्मिन् समये रणवर्मा आस्थानदैवज्ञेन चैतन्यशर्मणा सह वार्तालापं कुर्वन् आसीत् । अनङ्गवर्मा अभिनयपूर्वकं महाराजं

सूचितवान् यत् - अरण्ये केनचित् मन्त्रवादिना अहं वञ्चितः अभवम् इति । किन्तु अभिनयपूर्वकं कथितवतः अनङ्गवर्मणः भावं राजा रणवर्मा सम्यक् न अवगतवान् । तदा चैतन्यशर्मा महाराजम् अनङ्गवर्मणः परिस्थितिं निवेदितवान् ।

भाविनः जामातुः परिस्थितिं श्रुत्वा वञ्चकस्य संन्यासिनः विषये अतीव क्रुद्धः राजा रणवर्मा प्रवृत्तं सर्वम् एकस्मिन् पत्रे विलिख्य दूतद्वारा तत् पत्रम् अनङ्गवर्मणः पित्रे प्रेषितवान् ।

रणवर्मणा प्रेषितं पत्रं पठित्वा स्वपुत्ररूपेण स्थितः अनङ्गवर्मा न, अपि तु कश्चित् मन्त्रवादी इति ज्ञात्वा अतीव कुपितः अग्निवर्मा भटान् आज्ञापितवान् - "अनङ्गवर्मरूपेण यः अत्र अस्ति, सः न युवराजः । वृद्धः कश्चन मन्त्रवादी सः । अतः एतस्य मन्त्रवादिनः बन्धनं कृत्वा कारागृहे स्थापयन्तु" इति ।

महाराजस्य वचनं श्रुत्वा अनङ्गवर्मरूपी मन्त्रवादी चिन्तितवान् यत् - मम रहस्यम् इदानीं सर्वैः ज्ञातम् अभवत् इति । अतः इदानीम् आत्मानं रक्षितुं कश्चन उपायः करणीयः इति विचिन्त्य सः भटान् उक्तवान् - "मम पितुः मतिभ्रमणम् अभवत् इति भाति । यदि एषः एवमेव तिष्ठति, तर्हि महान् अनर्थः सम्भवेत् । अतः इदानीम् एव तं शृङ्खलया बद्ध्वा प्रकोष्ठे स्थापयन्तु । अनन्तरं किं करणीयम् इति राजवैद्येन सह चर्चां करिष्यामि" इति ।

एतत् सर्वं दृष्टवान् दूतः उदयगिरिं प्रति गत्वा राजानं रणवर्माणं प्रवृत्तं सर्वं






निवेदितवान् । दूतस्य मुखात् एतत् वचनं श्रुत्वा रणवर्मा चिन्तितवान् यत् - मन्त्रवादिनः जालात् प्रभातनगरं, बन्धने स्थितः अग्निवर्मा च यदि रक्षणीयौ, तर्हि प्रभातनगरस्य उपरि आक्रमणकरणं विना अन्यः उपायः कोऽपि नास्ति इति ।

अनन्तरं युद्धार्थं सर्वाः सिद्धताः कृताः ।

किन्तु सप्ताहाभ्यन्तरे एव मन्त्रवादी राजभवने यदा निद्रां कुर्वन् आसीत्, तदा विषसर्पेण दष्टः अभवत् । चिकित्साकरणतः पूर्वम् एव मरणं प्राप्तवान् च ।

एतस्याः घटनायाः अनन्तरं अग्निवर्मा बन्धनात् विमुक्तिं प्राप्य 'दुष्टस्य मन्त्रवादिनः कारणतः युवराजः अनङ्गवर्मा महत् कष्टम् अनुभूतवान्' इति राज्ये सर्वत्र प्रकटनं कारितवान् ।

मूकरामरूपी अनङ्गवर्मा स्वनगरं प्रत्यागतवान् । प्रभातनगरस्य जनाः वैभवेन अनङ्गवर्माणं स्वागतीकृतवन्तः ।

राजभवनस्य स्वशयनमन्दिरे पतितं निर्जीवं स्वशरीरं दृष्ट्वा अनङ्गवर्मा अतीव दुःखितः । सः अश्रूणि स्रावयन् अनङ्गवर्मरूपिणः स्वशरीरस्य शवसंस्कारार्थं मातापितरौ सूचितवान् ।

वेतालः एवं कथां समाप्य अवदत् - "राजन् ! आरम्भतः अपि अनङ्गवर्मणः व्यवहारः समीचीनः न आसीत् खलु ! सः अविवेकेन एव व्यवहृतवान् इति स्पष्टं ज्ञायते । यतः मन्त्रवादितः वञ्चितः सः मयूरस्य शरीरं प्रविश्य राजधानीं प्रभातनगरं गत्वा प्रवृत्तं सर्वं पितरं वक्तुम् अशक्ष्यत् खलु ! किन्तु सः तथा न कृतवान्, अपि तु मूकरामस्य शरीरं प्रविष्टवान् । एतस्मात् अनङ्गवर्मा अविवेकी इति तु स्पष्टं जातं खलु ! अपि च अनङ्गवर्मा अन्तःपुरे पतितस्य स्वशरीरस्य शवसंस्कारार्थं मातापितरौ सूचितवान् इति यत् तत् तु मूर्खतायाः परमावधिः खलु ! सः पूर्वं स्वशरीरतः मन्त्रवादिशरीरम्, अनन्तरं च मूकरामशरीरं परकायप्रवेशमन्त्रपठनपूर्वकं प्रविष्टवान् । तथैव मूकरामशरीरतः मन्त्रवादिरूपि स्वकीयं शरीरं प्रवेष्टुम् अपि अशक्ष्यत् खलु ! किन्तु सः तथा न कृतवान् किमर्थम् ? परकायप्रवेशमन्त्रं विस्मृतवान् वा सः ? अथवा तेन तस्मिन् समये औदासीन्यं प्रदर्शितं

वा ? अथवा सारासारविवेकं प्राप्तुम् अशक्तः सः अनिवार्यतया एवं व्यवहृतवान् वा ? अथवा अन्यत् एव महत् किमपि कारणं स्यात् वा ? एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत्, तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा त्रिविक्रमः एवम् उक्तवान् - ''अनङ्गवर्मा अत्यन्तं मेधावी कुशाग्रमतिः च । अतः एव सः विषमपरिस्थितौ अपि सम्यक् विचिन्त्य एव व्यवहृतवान् । सः सर्वथा अविवेकी न । यदि सः अरण्ये मयूरशरीरं प्रविष्टवान् स्यात्, तर्हि मन्त्रपठनपूर्वकं पुनः स्वशरीरप्राप्त्या वञ्चितः अभविष्यत् । यतः मयूरः मन्त्रम् उच्चारयितुं न शक्नोति खलु ! अतः सः मयूरशरीरे प्रवेशचिन्तनम् एव परित्यक्तवान्। अन्यच्च सः अश्वारोहिणा सह राजधान्याः सीमाप्रदेशं प्राप्य तत्रैव अवतीर्णः इति यत् तत्रापि प्रबलं कारणम् अस्ति । मन्त्रवादी अनङ्गवर्मरूपेण प्रभातनगरे विराजमानः आसीत् तदा । एवं सति अनङ्गवर्मा मन्त्रवादिवेषेण एव यदि मन्त्रवादिनः दृष्टिगोचरः अभविष्यत्, तर्हि तस्य हननम् अभविष्यत् । अपि च मूकरामस्य शरीरप्रवेशतः पूर्वं अनङ्गवर्मा न जानाति स्म यत् - सः मूकः आसीत् इति। मूकरामस्य शरीरस्य प्रवेशानन्तरं तस्य बान्धवानां सम्भाषणश्रवणात् अनङ्गवर्मा ज्ञातवान् यत् - सः मूकः आसीत् इति । तदनन्तरं सः महत् दुःखम् अनुभूतवान् अपि । मूकः परकायप्रवेशमन्त्रं स्पष्टम् उच्चारयितुं न शक्नोति। अतः एव अनङ्गवर्मा विषसर्पेण दष्टं स्वशरीरं प्रति प्रवेशः अशक्यः इति चिन्तयन् मातापितरौ सूचितवान् यत् - शवसंस्कारः क्रियताम् इति । अतः सर्वसन्दर्भेषु अपि अनङ्गवर्मणः व्यवहारः सन्दर्भोचितः सकारणः च आसीत् इति तु निर्विवादः अंशः'' इति।

एवं वदता राज्ञा त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# अभिप्रायभेदः

चन्द्रपुरस्य आस्थाने विष्णुशर्मनामकः महान् कविः आसीत् । तस्य औदार्य तावत् आसीत् यत् इतरकविभिः रचिताः उत्तमकविताः अपि प्रशंसति स्म सः । तस्मिन् एव आस्थाने नारायणशास्त्रिनामकः अपरः कविः आसीत् । सः अन्येषां कवीनां कीर्ति दृष्ट्वा असूयाम् अनुभवति स्म । उत्तमान् अपि कवीन् तिरस्कारेण पश्यति स्म ।

कवेः नारायणशास्त्रिणः विषये भवतः अभिप्रायः कः इति पृष्टः चेत् विष्णुशर्मा वदति स्म - ''नारायणशास्त्री उत्तमः कविः । तेन उत्तमाः कविताः रच्यन्ते'' इति ।

विष्णुशर्मणः विषये भवतः अभिप्रायः कः इति नारायणशास्त्री पृष्टः चेत् सः वदति स्म - ''तेन रचिताः कविताः न उत्तमाः, अपि तु सामान्याः । कवित्वं साधयितुं तेन इतोऽपि महान् परिश्रमः करणीयः'' इति ।

एषः विषयः महाराजेन ज्ञातः । महाराजः कदाचित् कविसम्मेलनम् आयोजितवान् । सम्मेलनकार्यक्रमसमये राजा विष्णुशर्माणं पृष्टवान् - ''शर्मन् ! नारायणशास्त्रिणः कविताः भवान् प्रशंसति । किन्तु नारायणशास्त्री भवतः कविताः न इच्छति । भवतः कवित्वविषये तस्य आदरः नास्ति । अत्र किं कारणम् ?'' इति ।

तदा विष्णुशर्मा मन्दहासपूर्वकम् उक्तवान् - ''आवयोः कवितारचनाशैल्यां भेदः स्यात् नाम । किन्तु एकस्मिन् विषये आवां समानं दोषं कृतवन्तौ । एतावद्दिनपर्यन्तम् अपि मम कवित्वविषयकः नारायणशास्त्रिणः अभिप्रायः, नारायणशास्त्रिणः कवित्वविषयकः मम अभिप्रायः च न वास्तविकः'' इति ।

विष्णुशर्मणः वचनस्य गूढार्थं गृहीतवान् नारायणशास्त्री लज्जितः अभवत् ।



## जम्बूवृक्षः

तिरुचनापल्लिसमीपे जम्बुकेश्वरनामकः सुप्रसिद्धः शिवालयः अस्ति। आलयस्य प्राङ्गणे महान् जम्बूवृक्षः अस्ति। जम्बूवृक्षस्य शाखाः वितानवत् शिवालयम् आवृताः सन्ति इति तु तत्रत्यः विशेषः। जम्बूवृक्षः न केवलं शिवस्य, अपि तु विनायकस्य श्रीकृष्णस्य च प्रीतिपात्रम् इति भारतीयाः मन्यन्ते। मेघानाम् अधिपतिः जम्बूवृक्षरूपेण जन्म प्राप्तवान् इति कारणतः जम्बूफलानि कृष्णवर्णीयानि भवन्ति इति काचित् कथा श्रूयते।

नीलमेघश्यामः श्रीकृष्णः अपि जम्बूफलवर्णीयः एव इति भक्ताः वर्णयन्ति। बौद्धाः अपि जम्बूवृक्षं पवित्रं मन्यन्ते।

सस्यशास्त्रे जम्बूवृक्षः 'सिजिक्वियं कुमिनि' (लिन्) इति उच्यते। पूर्वतनकाले भावना आसीत् - 'एषः वृक्षः इक्केनिया जाम्बोलाना लाङ्क जातीयः' इति।




सदा हरितायमानः एषः जम्बूवृक्षः उन्नतं वर्धते। वृक्षस्य प्रधानकाण्डभागः वक्रः सन् शाखाभिः अवनतः भवति। देशस्य सर्वभागेषु अपि जम्बूवृक्षाः वर्धन्ते। ग्रीष्मकाले जम्बूवृक्षः फलति। सामान्यतः मार्च्मासस्य मे-मासस्य च मध्यभागे एषः वृक्षः पुष्पितः भवति। हरित-श्वेतवर्णमिश्रितानि लघुलघुपुष्पाणि गुच्छरूपेण भवन्ति। जम्बूफलानि कृष्णवर्णीयानि कान्तियुतानि च भवन्ति। जम्बूफलस्य रसः रक्तनीलमिश्रितः भवति। जम्बूफलं शरीरस्य उष्णतां निवारयति, जीर्णशक्तिं च वर्धयति। जम्बूवृक्षस्य फलं, पर्णं, बीजं, त्वक् च औषधार्थम् उपयोक्तुं शक्यते। जम्बूवृक्षस्य काण्डभागः दृढः भवति इति कारणतः नौकानिर्माणे अपि एतस्य काष्ठस्य उपयोगः क्रियते विशेषतः।




# आदिकविः वाल्मीकिः

अस्माकं देशः सहस्राधिकवर्षेभ्यः पूर्वम् अरण्यमयम् आसीत् । एकस्मात् प्रदेशात् अन्यः प्रदेशः गन्तव्यः चेत् अरण्यमार्गेण एव गन्तव्यम् आसीत् । तेषु दिनेषु चौर्यम् अधिकतया आसीत् ।

कदाचित् रामनाम जपन् कश्चित् मुनिवरः अरण्यमार्गेण गच्छन् आसीत् । तस्मिन् समये 'तिष्ठतु' इति ध्वनिं श्रुत्वा मुनिवरः परितः अवलोकितवान् । दृढकायः कश्चित् परशुं गृहीत्वा मार्गस्य अवरोधपूर्वकं स्थितवान् आसीत् ।

तं दृष्ट्वा - ''कः भवान् ?'' इति पृष्टवान् मुनिवरः ।

तदा दृढकायः कठोरस्वरेण उक्तवान् - ''मम दर्शनेन अहं कः इति ज्ञातुं न शक्नोति वा भवान् ? अहं लुण्ठाकः अस्मि । भवतः समीपे विद्यमानानि वस्तूनि दत्त्वा इतः निर्गच्छतु भवान्'' इति ।

दृढकायस्य एतत् वचनं श्रुत्वा मुनिवरः पृष्टवान् - ''कतिवर्षेभ्यः भवान् लुण्ठनं कुर्वन् अस्ति ?'' इति ।

''बहुभ्यः वर्षेभ्यः लुण्ठनं कुर्वन् अस्मि अहम् । तत् सर्वं किमर्थं भवतः ? मया यत् उक्तं तत् करोतु भवान्'' इति उक्तवान् लुण्ठाकः ।

''भवतु । भवतः वचनानुसारम् एव करोमि । किन्तु भवान् एतादृशं लुण्ठनं कस्य निमित्तं कुर्वन् अस्ति इति प्रथमं वदतु तावत्'' इति उक्तवान् मुनिवरः ।

''अन्यस्य कस्य निमित्तम् ? मम पत्नीपुत्राणां पोषणार्थम्'' इति उक्तवान् लुण्ठाकः ।

तदा मुनिवरः पृष्टवान् - ''पत्नीपुत्राणां निमित्तं भवान् घोरं पापं कुर्वन् अस्ति । तथापि भवतः पत्नीपुत्राः भवता कृतस्य पापस्य भागं वहेयुः वा ?'' इति ।

''अवश्यं भागिनः भवेयुः एव । यतः तेषां निमित्तम् एव खलु अहम् एतादृशं कार्यं कुर्वन् अस्मि'' इति उक्तवान् लुण्ठाकः ।

तदा मुनिवरः उक्तवान् - ''भवता कृतस्य पापस्य फलं भवता एव अनुभोक्तव्यम् । पापे भागी भवितुं न कोऽपि इच्छति । आवश्यकं चेत् पत्नीपुत्रान् पृच्छतु भवान्'' इति ।

अनन्तरं लुण्ठाकः गृहं गत्वा पत्नीपुत्रान् एतद्विषये पृष्टवान् ।

लुण्ठाकस्य पत्नी उक्तवती - ''कुटुम्बपोषणं भवतः दायित्वम् । कुटुम्बपोषणार्थं भवान् यं कमपि मार्गम् अनुसरतु । किन्तु भवता कृते पापे तु वयं भागिनः न भवामः । मुनिवरः वस्तुस्थितिम् एव भवन्तम् उक्तवान्'' इति ।

पुत्राः अपि मातुः वचनम् एव पुरस्कृतवन्तः ।

एतत् श्रुत्वा दुःखितः लुण्ठाकः धावन् मुनिवरसमीपं गत्वा तं प्रार्थितवान् - ''पापकूपात् मां रक्षतु

कृपया'' इति।

करुणामयः मुनिवरः लुण्ठाकं रामनाम उपदिशन् - ''भक्त्या रामनाम जपतु भवान्। तेन भवान् पापमुक्तः भविष्यति'' इति उक्त्वा ततः निर्गतवान्।

अनन्तरं लुण्ठाकः कस्यचित् वृक्षस्य अधः उपविश्य नेत्रे निमील्य रामनामस्मरणम् आरब्धवान्।

बहूनि वर्षाणि अतीतानि।

पुनः कदाचित् तेन एव मार्गेण गच्छता मुनिवरेण कस्माच्चित् वल्मीकात् रामनाम श्रुतम्। मुनिवरः वल्मीकसमीपं गत्वा वल्मीकं भञ्जितवान्। तदा जटाधारी कश्चित् मुनिः वल्मीकात् उत्थितवान्। सः एव जटाधारी मुनिः पूर्वतनकाले लुण्ठाकः आसीत्। तस्य लुण्ठाकस्य पूर्वतनं नाम रत्नाकरः इति। सः वल्मीकात् जातः इति कारणतः 'वाल्मीकिः' इति नाम्ना प्रसिद्धः अभवत्।

वाल्मीकिः तमसानद्याः तीरे आश्रमं निर्माय तपोजीवनं यापयति स्म। कदाचित् प्रातःकालसमये सः नद्यां स्नात्वा आश्रमं प्रति गच्छन् सुन्दरं क्रौञ्चपक्षिमिथुनं दृष्टवान्। तावता कश्चित् व्याधः तयोः एकं क्रौञ्चपक्षिणं स्वबाणेन हतवान्। तत् दृष्टवतः वाल्मीकेः हृदयं द्रुतम्। पक्षिणः मरणात् उत्पन्नः शोकः श्लोकरूपेण वाल्मीकिमुनेः मुखात् निर्गतम्।

एवं रीत्या वाल्मीकिः आदिकविः सञ्जातः।

अनन्तरकाले वाल्मीकिना रचितं रामायणं जगत्प्रसिद्धं संस्कृतकाव्यम्। रामायणम् अनेकासु भाषासु अनूदितं सत् निरन्तरं जनान् तोषयत् अस्ति इति विषयः सर्वैः ज्ञातः एव।

आदर्शजीवनं यापनीयम् इति आत्मविश्वासेन यदि दृढसङ्कल्पः क्रियते, तर्हि सामान्यः अपि कश्चित् महात्मा भवितुम् अर्हति इति एतस्याः वास्तविकतायाः एकं निदर्शनं वाल्मीकिमुनेः जीवनम्।



# भवन्तः जानन्ति वा ?

१. ऐदम्प्राथम्येन मेट्रिक्पद्धतेः व्यवहारपथे आनयनं कस्मिन् देशे अभवत् ?
२. देवतानां खातं किम् ? तच्च अस्माकं देशे कुत्र अस्ति ?
३. अलेग्जाण्डर्महाशयस्य बाल्ये तेन प्राप्तस्य अश्वस्य नाम किम् ?
४. अस्माकं देशस्य तत् नगरं किम्, यच्च पाटलनगरम् इति प्रसिद्धिं गतम् अस्ति ?
५. आत्मरक्षणार्थम् अत्युपयुक्ता 'जुडो' कला केन कदा निरूपिता ?
६. नाट्यकलाविषयकः सुप्रसिद्धः संस्कृतग्रन्थः कः ? ग्रन्थस्य रचयिता च कः ?
७. तस्य उत्सवस्य नाम किम्, यस्मिन् स्वामिनः एव सेवकेभ्यः भोजनं परिवेषयन्ति ?
८. शून्यसंशोधकः भारतीयः गणितशास्त्रज्ञः कः ?
९. 'हेल्त् स्टाम्प्' निर्मापकः देशः कः ? तस्य विशेषता च का ?
१०. सूर्यं परितः एकवारं परिभ्रमणं कर्तुं भूमेः कियान् कालः आवश्यकः ?
११. जपान्देशसम्बन्धी प्राचीनतमः ग्रन्थः कः ?
१२. ऐदम्प्राथम्येन भारतदेशम् आगतः अमेरिकादेशस्य अध्यक्षः कः ?
१३. प्रपञ्चस्य महान् ग्रन्थालयः कः ?
१४. टोकियोनगरस्य पूर्वतनं नाम किम् ?
१५. गेलिलियोमहाशयस्य प्रथमं संशोधनं किम् ?
१६. सः देशः कः, यश्च स्वदेशस्य भूपटं स्वलाञ्छने योजितवान् अस्ति ?

## उत्तराणि

१. फ्रान्स्देशे ।
२. कुलूखातम्, हिमाचलप्रदेशे ।
३. बूसि फलस् ।
४. राजस्थानस्य राजधानी जयपुरम् ।
५. डा।। जिगोरोकानूमहाशयेन । १८८२ तमे वर्षे ।
६. नाट्यशास्त्रम्, भरतमुनिः ।
७. शाटर्नालिया ।
८. आर्यभटः ।
९. न्यूजिल्याण्ड् । ततः उत्पन्नः आयः आरोग्य-संस्थाभ्यः वितीर्यते ।
१०. ३६५ दिनानि, ५ घण्टाः, ४८ निमेषाः, ४६ सेकेण्ड्स् ।
११. कोजिकिक् । एषः ग्रन्थः प्राचीनजपान्देशस्य इतिहासं बोधयति ।
१२. ड्वैट् ऐसेन् होवर्, १९५६ तमे वर्षे ।
१३. मास्कोदेशस्थः लेनिन् स्टेट् ग्रन्थालयः ।
१४. ईडो ।
१५. लोलकम् ।
१६. सैप्रस् ।



# सीतापतेः निद्रा

शङ्खपुरग्रामं परितः विद्यमानः प्रदेशः शिलामयः। कदाचित् ग्रीष्मकालः आसन्नः। महान् आतपः। शङ्खपुरस्य कस्मिंश्चित् विशाले प्रदेशे धनिकः सीतापतिः गृहं निर्मितवान्। सीतापतिः यद्यपि महान् धनिकः, तथापि तस्य निद्रा नास्ति।

सीतापतेः सेवकाः चामरैः वीजयन्ति स्म। शयनगृहं परितः तदा तदा जलसेचनं कुर्वन्ति स्म। तथापि सीतापतिः निद्रां प्राप्तुम् अशक्तः अभवत्।

निद्राराहित्यकारणतः सीतापतेः शिरोवेदना आरब्धा। एतस्मात् तस्य गृहसदस्यानाम् अपि निद्रा न भवति स्म।

आश्चर्यं नाम तस्मिन् महति घर्मवातावरणे अपि केचन निद्रां प्राप्नुवन्ति स्म।

सेवकानां निद्रां दृष्ट्वा असूयया सीतापतिः तान् तर्जयति स्म - "मम आश्रये एव जीवनं यापयन्तः भवन्तः मम निद्राभावं पश्यन्तः अपि कथं निद्रां प्राप्नुवन्ति?" इति।

पुनः पत्नीपुत्राणां विषये अपि कुपितः सन् वदति स्म - "सर्वं मया सम्पादितम् अस्ति इति कारणतः भवन्तः सुखेन जीवन्ति। मम परिश्रमकारणतः भवन्तः सुखिनः। एवं सत्यपि मम निद्राराहित्यं पश्यन्तः अपि भवन्तः कथं सुखेन निद्रां प्राप्नुवन्ति?" इति।

किन्तु सीतापतेः कष्टं दृष्ट्वा सर्वे खेदम् अनुभवन्ति स्म। कश्चित् वैद्यम् आनीय सीतापतेः परीक्षां कारितवान्। वैद्यः परीक्षां कृत्वा उक्तवान् - "शरीरे कोऽपि रोगः नास्ति। सर्वम् अपि मानसिकम् एव" इति।

अन्यः कश्चित् मन्त्रवादितः तायकं कारयित्वा आनीय सीतापतेः कण्ठे बद्धवान्। देवस्य विशेषपूजा अपि कारिता।



तथापि किमपि प्रयोजनं न जातम्।

एवं स्थिते कदाचित् कश्चित् संन्यासी सीतापतेः गृहम् आगतवान् । सीतापतेः समस्यां ज्ञात्वा संन्यासी उक्तवान् - "अधिकाधिकं धनं सम्पादनीयम् इति एकेन एव कारणेन भवान् महत् कष्टम् अनुभवन् अस्ति । किन्तु भवता एकः प्रधानः अंशः विस्मृतः यत् - जीवनं नाम जले स्थितः बुद्बुदः इव। सः कदाचित् भग्नः भवति एव इति" इति।

तदा सीतापतिः संन्यासिनम् उद्दिश्य - "जीवनं न शाश्वतम् इति अहं जानामि एव। किन्तु तेन किं प्रयोजनम् ?" इति पृष्टवान्।

एतत् श्रुत्वा संन्यासी उक्तवान् - "मानवस्य जीवनं दैवेन दिवसरूपेण विभक्तम् अस्ति । प्रत्येकम् अपि दिनं दिवारात्रियुतं भवति। दिवासमये मानवः कार्याणि करोति। रात्रिसमये सर्वैः अपि सुखेन निद्रा करणीया । निद्रा मानवस्य मरणम् इव। मानवः निद्रारूपेण प्रतिदिनम् अपि तात्कालिकं मरणं प्राप्नोति। केषाञ्चित् वर्षाणाम् अनन्तरं मानवः शाश्वतं निद्रां करोति" इति।

"एषः विषयः सर्वैः अपि ज्ञातः एव खलु" इति पृष्टवान् सीतापतिः।

तदा संन्यासी उक्तवान् - "ये एतं वास्तविकविषयं जानन्ति, ते निरातङ्कं निद्रां कुर्वन्ति । प्रतिदिनम् अपि कञ्चन कालं यावत् सर्वं विस्मरणीयम्। यदि तथा विस्मर्तुं न शक्यते, तर्हि निद्राम् अपि प्राप्तुं न शक्यते" इति।

एतत् श्रुत्वा सीतापतिः पृष्टवान् - "मम आश्रये एव बहवः जीवनं निर्वहन्तः सन्ति। एतेषाम् उत्तरदायित्वं विस्मर्तुं कथं वा शक्नुयाम् अहम् ?" इति।

"एवं तर्हि मया सह आगच्छतु। कञ्चित् मनुष्यं दर्शयामि" इति उक्तवान् संन्यासी।

सीतापतिः संन्यासिवेषं धृत्वा संन्यासिनम् अनुसृतवान् । तौ उभौ अपि अचश्चलनामकस्य गृहं गतवन्तौ। अचश्चलः उभौ अपि सादरं स्वागतीकृत्य ताभ्यां भूरिभोजनं दत्तवान्।

संन्यासी अचश्चलम् आशिषा अनुगृह्णन् पृष्टवान् - "सर्वं कुशलं खलु !" इति।

तदा अचश्चलः खेदेन उक्तवान् - "मम

माता अनारोग्येण शय्याम् आश्रितवती अस्ति । तस्याः औषधनिमित्तं महान् धनव्ययः भवति । मम पत्नी अहोरात्रं मातुः सेवां कुर्वती अस्ति । एवं सत्यपि मम माता केनापि व्याजेन स्नुषां तर्जयति । अतः प्रतिदिनं मम गृहे श्वश्रूस्नुषयोः कलहः । मम ज्येष्ठः पुत्रः कुटुम्बस्य दायित्वं निर्वोढुम् असमर्थः । वृथा धनव्ययं करोति सः । द्वितीयः पुत्रः सज्जनः । किन्तु तस्य व्यवहारज्ञानं न्यूनम् । अस्मिन् वर्षे क्षेत्रे फलसमृद्धिः अपि उत्तमा नास्ति । अतः ऋणं कृत्वा कथमपि जीवननिर्वहणं कुर्वन् अस्मि'' इति ।

एतत् सर्वं श्रुत्वा संन्यासी पृष्टवान् - ''एवं तर्हि भवतः समस्यायाः परिहारः कः ?'' इति ।

तदा अचञ्चलः निर्विकारभावेन उक्तवान् - ''मम कर्तव्यम् अहं निर्वहामि । अन्यत् सर्वं दैवाधीनम्'' इति ।

किञ्चित्कालानन्तरम् अचञ्चलः संन्यासिनम् उद्दिश्य - ''स्वामिन् ! मम एकं प्रमुखं कार्यम् अस्ति । अतः इदानीम् अहं बहिः गच्छन् अस्मि । मम आगमनपर्यन्तम् अत्रैव तिष्ठतु'' इति उक्त्वा गृहतः निर्गतवान् । तदा मध्याह्नसमयः आसीत् ।

संन्यासी सीतापतिः च रहस्येन अचञ्चलस्य अनुसरणं कृतवन्तौ ।

ग्रामात् बहिः वाटिका आसीत् । अचञ्चलः तत्र गत्वा वृक्षस्य छायायां स्वकीयम् उत्तरीयं प्रसार्य तदुपरि शयनं



कृतवान्, अपरक्षणे एव निद्रां प्राप्तवान् च ।

एतत् दृष्ट्वा संन्यासी सीतापतिम् उक्तवान् - ''सर्वं प्रत्यक्षं दृष्टं खलु भवता ? सर्वविधानि कष्टानि अपि किञ्चित्कालं वा विस्मरणीयम् इत्येव निद्रानामकेन वरेण देवः अस्मान् अनुगृहीतवान् अस्ति । अतः एव समस्याबाहुल्ये सत्यपि अचञ्चलः निद्रायाः सदुपयोगं कुर्वन् अस्ति'' इति ।

एतत् दृष्ट्वा सीतापतिः कोपेन - ''अचञ्चलः समस्याग्रस्तः चेदपि अत्र आगत्य सुखेन निद्रां कुर्वन् समययापनं कुर्वन् अस्ति । एषः स्वदायित्वं न जानाति । अतः एव महत् दारिद्र्यम् अनुभवति । इदानीम् एव तम् उत्थाप्य धनसम्पादनं कथम् इति बोधयामि'' इति उक्तवान् ।



"भवान् यथा इच्छति तथा करोतु" इति उक्तवान् संन्यासी।

यावत् सीतापतिः अचञ्चलं निद्रातः उत्थापयितुम् उद्युक्तः तावता वृक्षस्य पृष्ठभागतः कश्चित् आगत्य सीतापतिं पार्श्वे नयन् तर्जनस्वरेण पृष्टवान् - "भवान् उन्मत्तः वा ? किमर्थं निद्रां कुर्वन्तम् उत्थापयितुम् इच्छति ?" इति।

तदा सीतापतिः अपि कोपेन पृष्टवान् - "मां प्रष्टुं भवान् कः ? अहम् एतं निद्रातः उत्थापयामि चेत् भवतः का हानिः ?" इति।

"मद्विषयम् अनन्तरं वदिष्यामि। प्रथमं मम प्रश्नस्य उत्तरं वदतु" इति उक्तवान् सः मनुष्यः।

तदा सीतापतिः उक्तवान् - "धनसम्पादनस्य बहून् मार्गान् अहं जानामि। एतस्य अचञ्चलस्य धनस्य आवश्यकता महती अस्ति। अस्मिन् समये निद्राकरणापेक्षया धनसम्पादनमार्गस्य चिन्तनं वरम्। अतः तत् बोधयितुम् इच्छन् एतम् उत्थापयामि" इति।

एतत् श्रुत्वा सः मनुष्यः उक्तवान् - "रात्रिसमये गृहे एतस्य निद्रावकाशः अत्यल्पः। द्वयोः वणिजोः समीपं रात्रिसमये उद्योगं करोति एषः। तत्र कार्यं दिनसमये न शक्यते इति वणिजौ उक्तवन्तौ स्तः। न केवलम् एतावत्, एतस्य मातुः अस्वास्थ्यं रात्रिसमये अधिकं भवति। तस्याः महान् कासः अस्ति। अतः पर्यायरूपेण केनचित् मातुः पार्श्वे एव स्थातव्यम्। अतः एव एषः अचञ्चलः दिवासमये अत्र आगत्य निद्रां करोति। तदपि यदा कृषिकार्यं न भवति तदा एव। एवं स्थिते निद्रातः एतस्य उत्थापनम् उचितं न खलु!" इति।

"एवं तर्हि भवान् कः ?" इति पृष्टवान् सीतापतिः।

तदा अपरः उक्तवान् - "अहम् एतस्याः वाटिकायाः स्वामी अस्मि। मम गृहे मां किमपि कार्यं न वदन्ति। अतः सर्वदा अपि मम विरामः एव। जीवने किमपि साधनीयम् इति मम इच्छा। किन्तु किं करणीयम् इति न जानामि। तस्मात् कारणात् रात्रिसमये अहं निद्रां न प्राप्नोमि। अचञ्चलः आगत्य मम वाटिकायां निद्रां करोति इति ज्ञातवान्

अहम् । समस्याकूपे पतितः अचञ्चलः एव यदि निद्रां प्राप्नोति, तर्हि अहम् अपि निद्रां प्राप्नुयाम् इति कारणतः केभ्यश्चित् दिनेभ्यः अत्र प्रयत्नं कुर्वन् अस्मि'' इति ।

एतत् श्रुत्वा सीतापतिः पृष्टवान् - ''अत्र भवान् निद्रां प्राप्तुं शक्तवान् वा ?'' इति ।

तदा वाटिकायाः स्वामी उक्तवान् - ''निद्राप्राप्त्यर्थं परिसरः न कारणम् । निद्रा मनस्सम्बन्धिनी । अतः मनसः शान्त्यर्थं प्रयत्नः करणीयः । मम वाटिकायां निद्राजनकं किमपि नास्ति'' इति ।

एतत् श्रुत्वा सीतापतिः - ''भवतः समस्या परिहृता खलु ! एवं सत्यपि भवान् इतोऽपि अचञ्चलस्य निद्रां पश्यन् कति दिनानि अत्र तिष्ठति ?'' इति पृष्टवान् ।

तदा वाटिकास्वामी क्षणकालं विचिन्त्य उक्तवान् - ''भवान् न जानाति यत् - सुखनिद्रा एव महत् सौभाग्यम् इति । तादृशं सौभाग्यं प्राप्तवतः दर्शनम् एव महान्तं सन्तोषं जनयति । अचञ्चलस्य केनापि प्रकारेण निद्राभङ्गः यथा न भवेत्, तथा अहम् अत्र रक्षणं कुर्वन् अस्मि । एतेन एव मम महती तृप्तिः । अतः रात्रिसमये अहं सुखनिद्रां प्राप्नुवन् अस्मि'' इति ।

एतत् श्रुत्वा सीतापतौ विवेकः उदितः । 'अहम् अन्येषां निमित्तम् एव धनसम्पादनं कृतवान् चेत् अपि अन्यैः यत् सुखम् अनुभूयते तत् द्रष्टुं न शक्तवान् असूयया । स्वयं निद्रां प्राप्तुम् अशक्तः अहम् अन्येषां निद्रां न सोढवान् । एवं तर्हि मम मनः न परिशुद्धम् । अतः एव अहं निद्रां न प्राप्नोमि । अपरिचितस्य अचञ्चलस्य अपि निद्राभङ्गं कर्तुम् उद्युक्तः जातः आसम्, न तु आनन्दम् अनुभोक्तुं शक्तः' इति चिन्तयन् स्वदोषं ज्ञातवान् सीतापतिः ।

अनन्तरं सीतापतिः वाटिकायाः स्वामिने कृतज्ञतां समर्प्य संन्यासिनं च नमस्कृत्य गृहं गतवान् ।

तस्मात् दिनात् आरभ्य सीतापतिः अन्येषां साहाय्यं कुर्वन्, अन्यैः प्राप्तं सुखं दृष्ट्वा सन्तोषम् अनुभवन् नूतनं जीवनम् आरब्धवान् । सुखनिद्रां प्राप्तवान् च ।





# अश्रद्धायाः फलम्

कस्मिंश्चित् ग्रामे गिरिधरनामकः कश्चित् युवकः आसीत् । सः अतीव दरिद्रः । गिरिधरस्य मातापितरौ न आस्ताम् । जीवननिर्वहणार्थम् उद्योगः अपि न आसीत् गिरिधरस्य ।

गिरिधरस्य ग्रामवासिनः ज्येष्ठाः केचन तदा तदा ग्रामात् अनतिदूरे विद्यमानस्य वटवृक्षस्य अधः उपविश्य वार्तालापं कुर्वन्ति स्म । ग्रामज्येष्ठाः कदाचित् रात्रौ वार्तालापार्थं वटवृक्षस्य अधः उपविष्टवन्तः । तेषां सम्भाषणमध्ये गिरिधरस्य विषयः अपि प्रस्तुतः । ते सर्वे सम्भूय बहुधा चर्चां कृत्वा अन्ते निर्णीतवन्तः - "गिरिधराय कश्चन उद्योगः दापनीयः । यदि शक्यं तस्य विवाहः अपि कारणीयः । एतत् ग्रामज्येष्ठानाम् अस्माकं कर्तव्यम्" इति ।

अनन्तरदिने ते गिरिधरम् आहूय उक्तवन्तः - "भवता प्रतिदिनम् एतद्-ग्रामीणानां सर्वेषां गृहाणां जलव्यवस्थां करणीया । जलं च तटाकतः आनेतव्यम् । एतस्य प्रतिफलरूपेण प्रतिदिनम् एकैकस्य गृहे पर्यायरूपेण भवतः भोजनव्यवस्था क्रियते" इति ।

गिरिधरः ग्रामीणानाम् एतत् वचनम् अङ्गीकृतवान् ।

अनन्तरदिनात् आरभ्य गिरिधरः ग्रामस्थानां सर्वेषां कुटुम्बानां निमित्तं जलव्यवस्थां कृतवान् । प्रातःकालतः सायङ्कालपर्यन्तम् अपि तटाकतः जलम् आनयति स्म गिरिधरः ।

कानिचन दिनानि अतीतानि । ग्रामज्येष्ठाः कदाचित् परस्परं वार्तालापं कर्तुम् इच्छन्तः वटवृक्षसमीपं गत्वा वृक्षस्य अधः उपविष्टवन्तः । गिरिधरः अपि अनतिदूरे स्थित्वा तेषां सम्भाषणं रहसि शृणोति स्म ।

'विवेकः'

तस्मिन् ग्रामे प्राचीनः कश्चन शिवालयः अस्ति। देवालयविषये वक्तुम् इच्छन् कश्चित् वृद्धः उक्तवान् - "शिवालये किञ्चन शासनं लिखितम् अस्ति। आश्चर्यकराः विषयाः अपि शिलायां लिखिताः सन्ति" इति।

तत्र एवम् अपि लिखितम् आसीत् - 'यदि कश्चित् शतघटपरिमाणकेन जलेन शिवलिङ्गस्य अभिषेकं करोति, तर्हि सः महाराजः भविष्यति' इति।

एतस्य विषयस्य प्रस्तावं कुर्वन् कश्चित् ज्येष्ठः उपहासपूर्वकम् उक्तवान् - "यदि महाराजपदवी प्राप्येत, तर्हि सर्वे अपि शिवलिङ्गस्य अभिषेकं कुर्युः। किन्तु सर्वे अपि महाराजपदवीं प्राप्तुं न शक्नुवन्ति। एषः असम्भवः। अतः एतत् तु अर्थहीनम् एव शासनम्" इति।

अन्ये अपि ज्येष्ठाः एतत् एव वचनं पुरस्कृतवन्तः यत् - तत् शासनम् अर्थहीनम् एव इति।

एतादृशं वादं श्रुतवान् गिरिधरः तस्यां रात्रौ निद्राम् एव न प्राप्तवान्। तस्य चिन्तनम् आसीत् - अतिप्राचीनं शिवालयशासनम् अर्थहीनं कथं स्यात् इति।

'तटाकतः सार्धशतघटपरिमाणात्मकं जलम् आनीय शिवलिङ्गस्य अभिषेककरणं न तावत् सुलभम्। तदर्थं सहना आवश्यकी। एतत् कार्यं कर्तुम् असमर्थाः ते वृद्धाः। अतः अहं सार्धशतघटपरिमाणकं जलम् आनीय शिवलिङ्गस्य अभिषेकं करिष्यामि। भाग्यम् अस्ति चेत् महाराजपदवीं प्राप्नुयाम्, नो चेत् किञ्चित् पुण्यं वा प्राप्येत' इति चिन्तयन् गिरिधरः निद्रां कृतवान् तस्यां रात्रौ।



अनन्तरदिने प्रातः दैनन्दिनं जलवहनकार्यं शीघ्रम् एव समाप्य गिरिधरः जलम् आनीय शिवलिङ्गस्य अभिषेकम् आरब्धवान् । चत्वारिंशदधिक-शत-घटजलं यदा आनीतं, तदा एव गिरिधरः अतीव श्रान्तः । तस्य पादौ शक्तिहीनौ जातौ । तथापि दृढसङ्कल्पं कृतवान् सः पुनरपि अष्टघटमितं जलम् आनीय अभिषेकं कृतवान् ।

अतीव श्रान्तः गिरिधरः - 'एतावता अपि महाराजपदवीप्राप्तिः भवेत् इति लक्षणम् अपि न दृश्यते । ग्रामज्येष्ठैः सम्यक् विचिन्त्य एव उक्तम् अस्ति - शिवालयशासनम् अर्थहीनम् इति । अवास्तविके विषये विश्वस्य अहं मूर्खः जातः । वृथा श्रमः ऊढः मया । कथञ्चित् एतावत् कृतम् । इतोऽपि घटद्वयपरिमितं जलम् आनीय अन्ते घटेन शिवलिङ्गं कुट्टयामि । तेन शिवलिङ्गं भग्नं भवतु' इति विचिन्त्य घटद्वयमितं जलम् आनीय अन्ते महता कोपेन शिवलिङ्गं कुट्टितवान् ।

अपरक्षणे एव शिवलिङ्गं द्विधा विभक्तम् अभवत् । तन्मध्यतः त्रिशूलधारी शिवः प्रत्यक्षः जातः । एतत् दृष्टवतः गिरिधरस्य शरीरे भयात् कम्पनम् आरब्धम् ।

त्रिशूलधारी शिवः गिरिधरम् उक्तवान् - "रे मूर्ख ! भवान् बुद्धिहीनः अस्ति । करणीयं कार्यं श्रद्धया कृत्वा अनन्तरं फलापेक्षाकरणं बुद्धिमतां लक्षणम् । अन्तिमघटद्वय-परिमितम् अपि जलं भवान् यदि भक्त्या आनीय अभिषेकं कृतवान् स्यात्, तर्हि निश्चयेन भवान् महाराजपदवीं प्राप्तवान् स्यात् । भवतः अश्रद्धाकारणतः एव भवान् फलप्राप्तितः वञ्चितः जातः । इतः निर्गच्छतु भवान्" इति ।

स्वव्यवहारात् खिन्नः गिरिधरः मौनं ततः गतवान् । अपरक्षणे एव भग्नं शिवलिङ्गं शिवः च ततः अदृश्यौ जातौ ।

गिरिधरः प्रवृत्तं सर्वं ग्रामज्येष्ठान् निवेदितवान् । गिरिधरस्य वचनं श्रुत्वा आश्चर्यचकिताः ग्रामज्येष्ठाः शिवालयं गत्वा दृष्टवन्तः । किन्तु तत्र शिवलिङ्गं वा शासनशिला न आसीत् ।





# महाभारतम्

अरण्ये पत्नीभ्यां कुन्तीमाद्रीभ्यां सह आनन्देन विहरन् मृगयां कुर्वन् कालं यापयति स्म पाण्डुराजः । सः कदाचित् मृगयां कुर्वन् स्वबाणेन हरिणयुगलं मारितवान् । वास्तविकतया तौ हरिणौ न आस्ताम् अपि तु किन्दमनामकः मुनिः, तस्य पत्नी च हरिणवेषेण आनन्देन विहरन्तौ आस्ताम् । पाण्डुराजस्य बाणप्रयोगेण मरणावस्थायां स्थितः मुनिः कोपेन पाण्डुराजं शप्तवान् यत् - भवान् अपि पत्न्या सह आनन्देन विहारसमये मरणं प्राप्नोतु इति ।

मुनिशापं श्रुत्वा नितरां भीतः पाण्डुराजः मुनिं साष्टाङ्गं नमस्कृत्य प्रार्थितवान् - ''अज्ञानात् कृतः एषः अपराधः क्षन्तव्यः'' इति ।

किन्तु मुनिः पाण्डुराजस्य प्रार्थनां न अङ्गीकृतवान् ।

अज्ञानात् मुनिदम्पती मारितवान् इति कारणतः पाण्डुराजः अतीव दुःखितः । तदा पाण्डुः पुत्रवान् न आसीत् । मुनेः शापं स्मरन् पाण्डुः - 'इतःपरं पुत्रप्राप्तियोगः अपि नास्ति मम' इति विचिन्त्य कुन्तीं माद्रीं च आहूय उक्तवान् - ''अहं संन्यासाश्रमं स्वीकृत्य अरण्ये एव वासं करिष्यामि । भवत्यौ हस्तिनापुरं गत्वा एतं विषयं धृतराष्ट्रं, भीष्मं, विदुरं च निवेदयताम्'' इति ।

पत्युः वचनं श्रुत्वा कुन्ती माद्री च पाण्डुराजम् उक्तवत्यौ - ''भवतः धर्मपत्न्यौ आवां भवन्तं विहाय कुत्र गच्छेव ? कथं वा

६. पाण्डवानां जननम्



कानचन दिनानि वासं कृत्वा ततः शतशृङ्गपर्वतं गतवन्तः। तत्र अनेके ऋषयः आसन्। पाण्डुः तत्र तैः ऋषिभिः सह वसन् तपः आरब्धवान्।

'यस्य पुत्रः नास्ति, सः तपसः आचरणेन अपि पुण्यलोकं प्राप्तुं न अर्हति। मम तु पुत्राः न सन्ति। अतः सत्कुलप्रसूतात् श्रेष्ठात् कस्माच्चित् मम पत्नी यदि पुत्रवती भविष्यति, तर्हि पुण्यलोकप्राप्तिः भविष्यति एव' इति विचिन्त्य पाण्डुराजः स्वकीयम् आशयं कुन्तीं निवेदितवान्। अन्यतः पुत्रं प्राप्तुम् आरम्भे न अङ्गीकृतवती कुन्ती। किन्तु पाण्डुः अनुरोधेन पुत्रप्राप्त्यर्थं ताम् अङ्गीकारितवान्।

अनन्तरं कुन्ती पतिम् उद्दिश्य - "मम बाल्यकाले मुनिः दूर्वासाः मन्त्रमेकं माम् उपदिष्टवान् आसीत्। यदि अहं तं मन्त्रं जपामि, तर्हि अपरक्षणे एव मया स्मृता देवता आगत्य अपत्येन माम् अनुगृह्णाति। इदानीम् अहं कां देवतां स्मरामि ?" इति पृष्टवती।

कुन्त्याः वचनं श्रुत्वा पाण्डुः सन्तोषेण ताम् उक्तवान् - "दूर्वाससः अनुग्रहः अस्माकं क्षेमाय एव अभवत्। यः कौरववंशस्य राजा भविष्यति, सः कश्चित् श्रेष्ठः धर्मपरः स्यात्, धर्मपरिपालकः च स्यात्। अतः भवती धर्मदेवतां स्मृत्वा अपत्यं प्रार्थयतु" इति।

पत्युः आशयानुसारं कुन्ती दूर्वाससा उपदिष्टं मन्त्रं जपन्ती धर्मदेवतां यमधर्मराजं स्मृतवती। यमराजस्य अनुग्रहेण गर्भवती

जीवेव ? आवाम् अपि भवता सह तपः कुर्वः। मरणान्तरं पुण्यलोके पुनरपि आवां भवन्तं मेलिष्यावः। भवान् एतत् न अङ्गीकरोति चेत् आवाम् इदानीम् एव प्राणत्यागं कुर्वः" इति।

कुन्त्याः माद्र्याः च वचनं निराकर्तुम् अशक्तः पाण्डुः आत्मना सह तयोः वासम् अङ्गीकृतवान्। अनन्तरं त्रयः अपि आत्मना धृतानि अत्यमूल्यानि वस्त्राभरणानि निष्कास्य वल्कलवस्त्राणि धृतवन्तः। स्वसाहाय्यकान् च हस्तिनापुरं प्रति प्रेषितवन्तः। अनन्तरं ते देशसञ्चारं कुर्वन्तः नागशतपर्वतं, चैत्ररथं, कालकूटं, हिमवन्तं, गन्धमादनम्, इन्द्रद्युम्नह्रदम्, हंसकूटम्, अन्यानि तीर्थस्थानानि च गत्वा, तत्र तत्र

अपि जाता सा।

तत्र हस्तिनापुरे गान्धारी वर्षात् पूर्वम् एव गर्भवती आसीत्। तथापि तस्याः प्रसवः न जातः आसीत्। तावता कुन्ती पुत्रं प्रसूतवती। आश्रमस्थाः ऋषिवराः 'युधिष्ठिरः' इति शिशोः नामकरणं कृतवन्तः।

पुनश्च कुन्ती 'बलशाली कश्चित् पुत्रः प्राप्तव्यः' इति पाण्डुराजस्य आशयानुसारं मन्त्रपठनपूर्वकं वायुदेवं स्मृतवती। वायुदेवस्य अनुग्रहेण गर्भवती जाता कुन्ती भीमनामकं पुत्रं प्राप्तवती।

भीमः यदा जन्म प्राप्तवान्, तदा काचित् घटना प्रवृत्ता। कुन्ती शिशुम् अङ्के स्थापयित्वा उपविष्टवती आसीत्। तदा कुतश्चित् कश्चन व्याघ्रः तत्र आगतः। व्याघ्रात् भीता कुन्ती अङ्के शयितं शिशुं विस्मृत्य झटिति उत्थितवती। तदा शिशुः कस्याश्चन शिलायाः उपरि पतितः। अपरक्षणे एव सा शिला चतुर्धा भग्ना अभवत्।

एतत् दृष्ट्वा सर्वे दिग्भ्रान्ताः। एतां घटनां मनसि निधाय तत्रत्याः ऋषिवराः 'भीमसेनः' इति तस्य शिशोः नामकरणं कृतवन्तः।

लोकविख्यातः अन्यः अपि एकः पुत्रः आवश्यकः इति पाण्डुः इष्टवान्। तस्य इच्छानुसारं कुन्ती इन्द्रदेवताकं मन्त्रं जपन्ती इन्द्रस्य अनुग्रहेण गर्भवती जाता। पुत्रम् अर्जुनं च प्रसूतवती।

हस्तिनापुरे गान्धारी एकोत्तरशतं पुत्रान् प्रसूतवती। अत्र शतशृङ्गपर्वते कुन्ती त्रीन्





पुत्रान् प्रसूतवती । कुन्तीतः इतोऽपि एक पुत्रः प्राप्तव्यः इति पाण्डोः इच्छा आसीत् । किन्तु कुन्ती पुनः पुत्रं न इष्टवती । अतः सा पत्युः वचनम् न अङ्गीकृतवती ।

किन्तु माद्री पाण्डुं सविनयम् उक्तवती – "कुन्ती मन्त्रप्रभावतः पुत्रान् प्राप्तवती । भवतः पत्नी अहम् अपि कुन्तीसमाना खलु ! अहम् अपि पुत्रवती भवितुम् इच्छामि । यदि कुन्ती मां पुत्रप्राप्तिमन्त्रम् उपदिशति, तर्हि अहम् अपि पुत्रवती भवितुं शक्नुयाम्" इति ।

पाण्डुः माद्र्याः आशयं कुन्तीम् उक्तवान् । कुन्ती दूर्वाससा उपदिष्टं पुत्रप्राप्तिमन्त्रं माद्रीं बोधितवती ।

माद्री मन्त्रोच्चारणपूर्वकम् अश्विनी-देवताद्वयम् आहूय ततः नकुलं सहदेवं च प्राप्तवती । मन्त्रप्रभावेण इतोऽपि पुत्राः प्राप्तव्याः इति माद्र्याः इच्छा आसीत् । किन्तु माद्री युगपत् एव देवताद्वयम् आहूय पुत्रं प्राप्तवती इति यत् तत् कुन्त्याः इष्टाय न अभवत् । अतः सा पुनः माद्रीं मन्त्रं बोधयितुं न इष्टवती ।

पुत्राणां चेष्टाक्रीडादिकं पश्यन् पाण्डुराजः आनन्देन कालं यापयति स्म । आश्रमवासिनः सर्वे अपि पाण्डुपुत्रान् श्रद्धया पालयन्ति स्म । वसुदेवः पुरोहितस्य कश्यपस्य द्वारा पाण्डुपुत्रेभ्यः सुवर्णाभरणानि, कौशेय-वस्त्राणि, क्रीडनकानि च प्रेषितवान् ।

पाण्डुराजः पुत्राणां चूडाकर्म ब्रह्मोपदेशं च कारयित्वा तत्रत्यानाम् ऋषीणां द्वारा वेदाध्ययनं कारितवान् ।

कानिचन दिनानि अतीतानि । कदाचित् वसन्तकालसमये कुन्ती आगतानां अतिथीनां सत्कारं कुर्वती आसीत् । तस्मिन् समये एकान्ते स्थितां माद्रीं दृष्ट्वा अनुरागेण तस्याः समीपं गतवान् पाण्डुः । किन्तु किन्दममुनेः शापकारणतः सः तत्रैव मरणं प्राप्तवान् ।

मृतं पतिम् आलिङ्ग्य रोदनं कुर्वतीं माद्रीं दृष्ट्वा कुन्ती, पाण्डवाः, आश्रमस्थाः ऋषयः च तत्र आगत्य प्रवृत्तं सर्वं ज्ञात्वा आश्चर्यचकिताः । माद्री अतीव दुःखम् अनुभवन्ती कुन्तीं स्वसमीपम् आहूय अश्रूणि स्रावयन्ती पाण्डुराजस्य मरणकारणं तां निवेदितवती ।

तदा कुन्ती महता दुःखेन माद्रीम्

उक्तवती - "हा हन्त ! पाण्डुराजस्य ऋषिशापः अस्ति इति कारणतः एतावद्दिनपर्यन्तम् अपि अतीव जागरूकया आसम् अहम् इति विषयं न जानाति वा भवती ? राजा यदा भवत्याः समीपम् आगतवान्, तदा किमर्थं भवती तं न निवारितवती ? किमर्थं वा अवकाशं कल्पितवती ? इदानीं किमपि कर्तुं न शक्यते । ज्येष्ठा पत्नी अहं सहगमनं करिष्यामि । भवती सर्वान् अपि पुत्रान् सम्यक् पोषयतु" इति ।

कुन्त्याः एतत् वचनं श्रुत्वा माद्री अश्रूणि स्रावयन्ती - "अहं बहुधा प्रयत्नं कृतवती चेदपि मत्समीपम् आगच्छन्तं पतिं निवारयितुं न शक्तवती । पत्युः प्राणान् अपि रक्षितुम् अशक्ता पापिनी अहम् एतान् पुत्रान् कथं वा रक्षेयम् ? इहलोके तु पत्युः सुखं न आचरितवती अहं परलोके वा सुखं दातुं प्रयत्नं करोमि । अतः अहम् एव चितारोहणपूर्वकं सहगमनं करोमि" इति उक्त्वा पत्युः पाण्डुराजस्य चितां प्रविश्य प्राणान् त्यक्तवती ।

अनन्तरं शतशृङ्गस्य आश्रमवासिनः ऋषयः कुन्तीं, पाण्डवान्, माद्रीपाण्डु-राजयोः अस्थीनि च स्वीकृत्य हस्तिनापुरं गतवन्तः । प्रवृत्तं सर्वं भीष्मं धृतराष्ट्रं च निवेदितवन्तः च ।

पाण्डुराजस्य मरणवार्तां श्रुत्वा भीष्मः धृतराष्ट्रः च अतीव दुःखम् अनुभूतवन्तौ । धृतराष्ट्रः विदुरम् उक्तवान् - "मृतयोः अन्त्यसंस्कारं कारयतु' इति ।

विदुरः पाण्डुराजस्य माद्र्याः च





अन्त्यसंस्कारं व्यवस्थापितवान् । माद्र्याः पाण्डुराजस्य च अस्थीनि एकस्यां शिबिकायां संस्थाप्य शोभायात्रां कृत्वा गङ्गानद्यां त्यक्तानि । असंख्याकाः हस्तिनापुरवासिनः अपि शिबिकाम् अनुसृत्य गङ्गातीरं गतवन्तः । सर्वाणि कर्माणि समाप्य द्वादश-दिनानन्तरं सर्वे हस्तिनापुरं प्रत्यागताः ।

हस्तिनापुरम् आगतस्य व्यासमुनेः सूचनानुसारं सत्यवती अम्बिका-अम्बालिकाभ्यां सह राजभवनं परित्यज्य तपः आचरितुम् अरण्यं गतवती । अरण्ये एव बहुकालं यावत् तपं कुर्वत्यः ताः केषाञ्चित् वर्षाणाम् अनन्तरम् इहलोकं परित्यक्तवत्यः ।

तदारभ्य पाण्डवाः कौरवाः च धृतराष्ट्रेन एव पोषिताः ।

पाण्डवाः कौरवाः च मिलित्वा क्रीडन्ति स्म । सर्वे अपि परस्परं स्पर्धन्ते स्म । सर्वक्रीडासु अपि भीमः एव प्रथमस्थानं प्राप्नोति स्म । भीमः स्वपराक्रमं प्रदर्शयितुम् इच्छन् युगपत् एव दश जनान् उन्नीय वेगेन धावति स्म । यदि सः कुपितः भवति, तर्हि तस्य कोपस्य कारणीभूतानां शिखां गृह्णाति स्म । तरणसमये युगपत् एव दश जनान् जले निमज्ज्य दृढं गृह्णाति स्म । फलापेक्षिणः बालाः वृक्षस्य आरोहणं कुर्वन्ति चेत् तं वृक्षं कम्पयन् बालान् अधः पातयितुं प्रयत्नं करोति स्म भीमः । तदा वृक्षे स्थिताः बालाः पतनभीत्या कम्पन्ते स्म । भीमस्य चेष्टा दुरुद्देशपूर्णा न चेदपि, तदीयः स्वभावः अन्येषां सङ्कटदायकं भवति स्म ।

भीमस्य अपारां शक्तिं दृष्ट्वा दुर्योधनः असूयाम् अनुभवति स्म । भीमः एकः यदि मृतः भविष्यति, तर्हि अन्ये सर्वे मम वचनानुसारम् एव व्यवहरिष्यन्ति इति दुर्योधनस्य चिन्तनम् आसीत् । अतः सः भीमं मारयितुं समयं प्रतीक्षमाणः आसीत् ।

गङ्गातीरे प्रमाणकोटिनामकः कश्चन प्रदेशः अस्ति । तत्र जलक्रीडार्थम् आनुकूल्यं यथा स्यात्, तथा चतसृषु दिक्षु सोपानयुक्तं सरोवरम्, उद्यानं, पार्श्वे एव अट्टयुतं भवनं च निर्मापितवान् आसीत् दुर्योधनः । सर्वे चिन्तितवन्तः यत् कदाचित् विहारार्थं प्रमाणकोटिसरोवरं गन्तव्यम् इति ।

विहारार्थं प्रमाणकोटिस्थलं गन्तुं

सर्वविधाः व्यवस्थाः अपि कृताः। विविधानि भक्ष्याणि पानीयानि च सिद्धानि अभवन्। सर्वे अपि प्रमाणकोटिप्रदेशं प्रति प्रस्थिताः। सेवकाः अपि आहारं पानीयं च स्वीकृत्य सर्वैः सह प्रस्थितवन्तः।

राजकुमारैः सह पाण्डवाः अपि विहारार्थं सरोवरं गतवन्तः। सर्वैः सह पाण्डवाः अपि भक्ष्याणि पानीयानि च स्वीकृतवन्तः। किन्तु दुर्योधनः भीमस्य पार्श्वे एव उपविश्य, अत्यन्तम् आत्मीयताम् अभिनयन्, विषमिश्रितम् आहारं भीमः यथा खादेत्, तथा व्यवस्थां कृतवान् आसीत्। दुर्योधनविषये भीमस्य किञ्चिदपि सन्देहः न उत्पन्नः। तादृशः आसीत् दुर्योधनस्य व्यवहारः। भीमः आकण्ठं भुक्त्वा सर्वैः सह जलक्रीडां कृतवान्। तावता विषप्रभावतः भीमस्य उदरे सङ्कटम् आरब्धम्। अतः सः किञ्चित् विश्रान्तिं स्वीकर्तुम् इच्छन् गङ्गातीरे एकत्र शयनं कृतवान्, अल्पे एव काले तत्रैव मूर्च्छां गतः च।

स्वकुतन्त्रं यशस्वि जातम् इति कारणतः दुर्योधनः अतीव सन्तुष्टः। अनन्तरं सः भीमस्य हस्तौ पादौ च रज्ज्वा बद्ध्वा, गङ्गानद्याः गभीरे प्रदेशे तं क्षिप्तवान्। मूर्च्छावस्थायां स्थितः भीमः पाताललोकं गत्वा पतितः।

पाताललोके विषसर्पाः भीमं दष्टवन्तः। सर्पाणां विषकारणतः, दुर्योधनेन आहारे मिश्रीकृत्य भीमाय दत्तं विषं निस्सत्त्वम् अभवत्। तस्मात् भीमः सचेतनः जातः। स्वहस्तौ पादौ बद्धौ स्तः इति ज्ञात्वा भीमः बलात् अस्थिव्यावर्तनं कृतवान्। तेन रज्जुः छिन्ना अभवत्।

अनन्तरं ततः उत्थाय भीमः आत्मानं दशतः सर्पान् ताडितवान्।

सर्पाणां राजा वासुकिः एतां वार्तां ज्ञातवान्। वासुकिः भीमसमीपम् आगतवान्। भीमः स्वबन्धुः इत्यपि ज्ञातवान् वासुकिः। यतः कुन्त्याः पिता शूरः वासुकेः अनुजायाः पुत्रः। वासुकिः वात्सल्येन भीमाय शक्तिवर्धिनीं सुधां पायितवान्। भीमः सुधां पीत्वा सुखेन निद्रां कृतवान्।





# लोकनाथस्य पाण्डित्यम्

चम्पकपुरे कश्चित् भूस्वामी आसीत् । तस्य एकमात्रस्य पुत्रस्य नाम लोकनाथः। बाल्यात् अपि लोकनाथः अतीव प्रीत्या पालितः इति कारणतः सः अहङ्कारी कलहप्रियः च जातः आसीत्। आत्मानं श्रेष्ठं मन्यमानः सः अन्यान् उपहसति स्म । लोकनाथः नगरे अध्ययनं समाप्य स्वग्रामं चम्पकपुरं प्रत्यागतवान् आसीत्।

आत्मानं महापण्डितं मन्यमानः लोकनाथः चिन्तयति स्म यत् - कस्यचित् शापस्य कारणतः मया अस्मिन् कुग्रामे वासः करणीयः अभवत् इति । तस्य महान् गर्वः आसीत् यत् - तर्कशास्त्रे भाषाज्ञाने च प्रवीणः अहम् एव इति । एवं महान्तं गर्वम् अनुभवन् सः, तस्मिन् ग्रामे काचित् लघुघटना प्रवृत्ता चेदपि तद्विषये महत् विवरणं कुर्वन् जनेषु नीरसतां जनयति स्म ।

लोकनाथस्य ग्रामात् अनतिदूरे कश्चन तटाकः अस्ति । लोकनाथः कदाचित् तटाकतीरे उपविश्य स्नेहितैः सह जल्पनं कुर्वन् आसीत् । तस्मिन् समये गुरुराजनामकः कृषिकः तेन मार्गेण आगतवान् । गुरुराजं दृष्ट्वा तस्य उपहासं कर्तुम् इच्छन् लोकनाथः पृष्टवान् - "किं भोः ! गुरुराज ! महती शिला यदि जले स्थाप्यते, तर्हि अपरक्षणे एव सा शिला जले निमग्ना भवति । एतस्य कारणं किम् इति वक्तुं शक्नोति वा भवान् ?" इति।

तदा गुरुराजः मन्दहासपूर्वकम् उक्तवान् - "महती शिला किम् ! काचित् लघुशिला जले क्षिप्यते चेदपि सा निमग्ना भवति एव । यतः शिला तरणं न जानाति खलु !" इति।

एतत् श्रुत्वा लोकनाथः, तस्य मित्राणि च उच्चैः हसितवन्तः ।

अनन्तरं लोकनाथः गुरुराजम् उक्तवान् - "शिला तरणं न जानाति इति कारणतः जले निमग्ना भवति इति भवता यत् उक्तं, तत्

आधाररहितम् । भूमेः आकर्षणशक्तिः एव शिलां जले निमज्जयति'' इति ।

तदा गुरुराजः - ''मम कथनेन भवन्तः किमर्थं हसन्ति ? मया उक्तं सम्यक् एव अस्ति । मया उक्तम् आधारसहितम् इति निरूपयामि वा अहम् ?'' इति पृष्टवान् ।

'निरूपयतु' इति उक्तवान् लोकनाथः ।

तदा गुरुराजः लोकनाथम् उद्दिश्य - ''मत्स्यः यदि जले स्थाप्यते, तर्हि किमर्थं सः निमग्नः न भवति ?'' इति पृष्टवान् ।

''सः मत्स्यः खलु ! तस्य प्राणाः भवन्ति । अतः सः जले निमग्नः न भवति'' इति उक्तवान् लोकनाथः ।

''प्राणाः सन्ति चेदपि मत्स्यः भारवान् एव खलु !'' इति पृष्टवान् गुरुराजः ।

तदा लोकनाथः - ''भारवान् स्यात् मत्स्यः । किन्तु सः तरणं जानाति'' इति वदन् अनुक्षणं स्वदोषं ज्ञात्वा मौनम् आश्रितवान् ।

लोकनाथस्य वचनं श्रुत्वा गुरुराजः उक्तवान् - ''एवमेव शिला तरणं न जानाति । अतः जले निमग्नः भवति इति मया उक्तम् आधारसहितम् एव'' इति ।

एतावता अपि स्वदोषम् अङ्गीकर्तुम् अनिच्छन् लोकनाथः उक्तवान् - ''भवता उक्तम् आधारसहितम् एव स्यात् नाम । किन्तु सर्वस्यापि मूलं कारणं ज्ञातुं बहूनि शास्त्राणि सन्ति । अतः किञ्चित्प्रमाणेन वा शास्त्राध्ययनकरणम् अत्यन्तम् आवश्यकम्'' इति ।

लोकनाथस्य वचनं श्रुत्वा गुरुराजः मन्दहासपूर्वकं - ''वृथा निर्विषयं ये भवादृशाः वादं कुर्वन्ति, तादृशानां तु पाण्डित्यस्य आवश्यकता अस्ति । किन्तु मादृशाः ये प्रातःकालतः सायङ्कालपर्यन्तम् अपि परिश्रमेण कार्यं कुर्वन्ति, तादृशानां श्रमजीविनां तु अल्पं व्यवहारज्ञानं पर्याप्तम्'' इति वदन् ततः निर्गतवान् एव ।

गुरुराजस्य वचनं श्रुतवतः लोकनाथस्य मुखं विवर्णं जातम् । अनन्तरं स्वदोषम् अवगत्य सः कृषिकार्ये पितुः साहाय्यं कुर्वन् विनयव्यवहारम् अभ्यस्तवान् ।





# अपूर्वा पेटिका

कस्मिंश्चित् ग्रामे राघवनामकः युवकः आसीत् । राघवस्य बाल्ये एव तस्य माता दिवङ्गता । अनन्तरं तस्य पिता पुत्रं वात्सल्येन पोषितवान् । विमातुः कारणतः पुत्रस्य राघवस्य क्लेशः न भवेत् इति विचिन्त्य राघवस्य पिता द्वितीयविवाहम् अपि न इष्टवान् ।

राघवः परोपकारशीलः । सर्वेषां वचने अपि विश्वासं करोति स्म सः । राघवस्य एतस्य स्वभावस्य दुरुपयोगं कर्तुम् इच्छन्तः बहवः राघवं वञ्चयन्ति स्म । 'वञ्चकानां सहवासतः दूरे तिष्ठतु' इति पित्रा बोधितः चेदपि राघवः पितुः वचनं गम्भीरतया न परिगणयति स्म ।

कदाचित् राघवस्य गृहं प्रति आगतः संन्यासी राघवस्य प्रशंसां कृतवान् । एतेन राघवस्य पितुः मुखं म्लानं जातम् । एतस्मात् आश्चर्यचकितः संन्यासी राघवं बहिः सम्प्रेष्य तस्य पितरं पृष्टवान् - "भवान् गुणवतः पुत्रस्य प्रशंसां श्रुत्वा अपि खिन्नः खलु ! अत्र कारणं किम् ?" इति ।

तदा राघवस्य पिता उक्तवान् - "महानुभाव ! यद्यपि मम पुत्रः गुणवान्, तथापि तेन किमपि प्रयोजनं नास्ति । तस्य सौजन्यस्य दुरुपयोगं कुर्वन्तः जनाः तं वञ्चयन्ति । मम मरणानन्तरं सः कथं वा जीवननिर्वहणं कुर्यात् इत्येव चिन्ता मम । अतीव सौजन्यं मा प्रदर्शयतु इति अहं तदा तदा राघवम् उपदिशामि । किन्तु सः मम वचनं गम्भीरतया न परिगणयति । तथापि मम आशा आसीत् यत् - मम पुत्रः कदाचित् वा मम हितवचनेन वास्तविकताम् अवगच्छति इति । किन्तु अद्य महात्मा भवान् अपि तस्य प्रशंसां कृतवान् इति कारणतः सः इतःपरं मम वचनं सर्वथा न श्रृणोति" इति ।

एतत् श्रुत्वा संन्यासी राघवस्य पितरं सान्त्वयन् उक्तवान् - "भवतः पुत्रः अतीव



सज्जनः बुद्धिमान् च । तादृशाः लोके अत्यन्तं विरलाः । अतः एतादृशानां परिष्कारः न आवश्यकः । राघवस्य किञ्चित् व्यवहार-ज्ञानम् आवश्यकम् इति तु सत्यम् । अतः भवतः पुत्रं मत्समीपं प्रेषयतु भवान् । वर्षद्वयं यावत् तस्मै शिक्षणं दास्यामि अहम् । एतस्मात् भवान् निश्चिन्तः भविष्यति'' इति ।

एतत् श्रुत्वा पिता यद्यपि सन्तुष्टः, तथापि क्षणकालानन्तरं तस्य मनसि विचारः आगतः - 'वृद्धः अहं वर्षद्वयं यावत् पुत्रवियोगं सोढुं न शक्नुयाम् । पुत्रस्य प्रत्यागमनात् पूर्वम् एव मरणं प्राप्नुयाम्' इति ।

राघवस्य पितुः चिन्तनं जानन् संन्यासी उक्तवान् - ''अथवा एवं करोतु । अहं तीर्थयात्रां कुर्वन् अस्मि । तीर्थयात्रां समाप्य अहं कुसुमपुरस्थं कुसुमावतीनदीतीरस्थं मम आश्रमं प्राप्स्यामि । वर्षद्वयानन्तरं भवान् राघवं मम आश्रमं प्रति प्रेषयतु'' इति ।

अनन्तरं संन्यासी राघवं स्वसमीपम् आहूय उक्तवान् - ''वत्स ! सज्जनः भवान् दुष्टानां सहवासं परित्यज्य सत्कार्ये प्रवृत्तः भवतु । दुष्टानां नयवचनेषु विश्वासं मा करोतु'' इति ।

तदा राघवः सविनयं पृष्टवान् - ''भवतः वचनम् अवश्यं पालयिष्यामि । किन्तु दुष्टान् कथम् अभिजानामि अहम् ?'' इति ।

एतत् श्रुत्वा संन्यासी राघवस्य शिरसि हस्तं स्थापयित्वा आशिषा अनुगृह्णन् - ''अद्य आरभ्य दुष्टाः भवतः समीपं न आगच्छन्ति । वर्षद्वयं यावत् मम आशीर्वादः भवन्तं रक्षिष्यति । वर्षद्वयानन्तरं भवान् मम आश्रमम् आगच्छतु । तत्र दुष्टात् दूरे स्थितिः कथम् इति बोधयिष्यामि'' इति उक्त्वा ततः निर्गतवान् ।

आश्चर्यं नाम एतस्याः घटनायाः अनन्तरं राघवस्य स्नेहिताः केऽपि राघवसमीपं न आगच्छन्ति स्म । एतेन राघवः खिन्नः । तदा तस्य पिता राघवं सान्त्वयन् उक्तवान् - ''इतः परं दुष्टाः भवतः समीपं न आगमिष्यन्ति । एतत् सर्वं संन्यासिनः अनुग्रहस्य फलम्'' इति ।

वर्षद्वयम् अतीतम् । आसन्नमरणः राघवस्य पिता पुत्रं स्वसमीपम् आहूय

उक्तवान् - "वत्स ! मम आयुः समाप्तम् । अस्माकं भूमेः, गृहस्य च विक्रयणं करोति चेत् त्रिंशत्सहस्रं रूप्यकाणि प्राप्नोति भवान् । मम मरणानन्तरं एतत् गृहं भूमिं च विक्रीय धनं स्वीकृत्य भवान् कुसुमपुरं गच्छतु । तत्र अग्रे किं करणीयम् इति संन्यासी भवन्तं बोधयिष्यति । वर्षद्वयं केवलं संन्यासिनः अनुग्रहः आसीत् भवतः विषये । अतः अद्य आरभ्य भवान् कस्मिंश्चित् अपि जने विश्वासं मा करोतु" इति ।



सप्ताहानन्तरं राघवस्य पिता दिवङ्गतः । पितृवियोगात् दुःखितं राघवं सान्त्वयितुं बहवः जनाः तस्य गृहम् आगतवन्तः । मरणात् पूर्वं पित्रा यत् उक्तं, तत् राघवः आगतान् सर्वान् उक्तवान् । एतत् श्रुत्वा कश्चित् कृषिकः राघवाय त्रिंशत्सहस्रं रूप्यकाणि दत्त्वा तदीयं गृहं भूमिं च क्रीतवान् ।

एतां वार्तां ज्ञात्वा गणपतिनामकः राघवस्य स्नेहितः आगत्य उक्तवान् - "राघव ! प्रयाणसमये स्वसमीपे अधिकस्य धनस्य स्थापनं न क्षेमाय । यतः मार्गे भवतः धनं चोराः अपहरेयुः, वञ्चकाः वञ्चयेयुः वा । अस्माकं भूस्वामिनः शङ्करमूर्तेः समीपे त्रिंशत्सहस्ररूप्यकाणां मूल्ययुतं वज्रम् अस्ति । भवान् धनं दत्त्वा शङ्करमूर्तितः तत् वज्रं क्रीणातु । वज्रं रहस्येन वस्त्रेण बद्ध्वा स्थापयितुम् अर्हति भवान्" इति ।

शङ्करमूर्तेः समीपे अमूल्यं वज्रम् अस्ति इति तु सत्यम् । किन्तु शङ्करमूर्तिः राघवं वञ्चयितुम् इच्छन् गणपतिद्वारा राघवं प्रति हितवचनं वाचितवान् आसीत् ।

शङ्करमूर्तेः पुत्री सुशीला राघवे अनुरागवती अस्ति । सः एव परिणेतव्यः इत्यपि तस्याः इच्छा । किन्तु पिता शङ्करमूर्तिः एतं विवाहं न इच्छति इत्यपि जानाति सुशीला । इदानीं राघवं वञ्चयितुम् इच्छतः पितुः व्यवहारेण सुशीला अतीव खिन्ना ।

राघवः गणपतेः वचने विश्वस्य त्रिंशत्सहस्रं रूप्यकाणि स्वीकृत्य भूस्वामिनः शङ्करमूर्तेः गृहं गतवान् । शङ्करमूर्तिः राघवतः धनं स्वीकृत्य पुत्र्यै सुशीलायै यच्छन् उक्तवान् - "एतत् धनं सुरक्षितं स्थापयतु" इति ।

सुशीला पित्रा दत्तं धनं पेटिकायां सुरक्षितं स्थापितवती। अनन्तरम् एकस्यां पेटिकायां सहस्ररूप्यक-मूल्ययुतानि त्रिंशन्नाणकानि संस्थाप्य तेन सह राघवाय पत्रमेकं लिखित्वा पेटिकायां स्थापितवती। तस्मिन् पत्रे सुशीला एवं लिखितवती आसीत् - 'राघव ! अहं भवन्तम् इच्छामि। संन्यासिनः आश्रमतः प्रत्यागत्य मां वृणोतु भवान्। मम पिता वज्रमिव दृश्यमानं कमपि मणिं दत्त्वा भवन्तं वञ्चयति। अतः अहं भवदीयं धनं भवते एव अर्पयन्ती अस्मि' इति।

तावता शङ्करमूर्तिः पत्नीम् आहूय उक्तवान् - "राघवाय वज्रं विक्रीतवान् अस्मि। अतः कपाटिकायां विद्यमानं वज्रम् आनीय राघवाय ददातु" इति।

राघवे पुत्र्याः अनुरागः अस्ति इति ज्ञात्वा सुशीलायाः माता वास्तविकं वज्रम् एव आनीय राघवाय दत्तवती।

तावता सुशीला स्यूतमेकम् आनीय राघवाय यच्छन्ती उक्तवती - "अस्मिन् स्यूते कश्चन विशेषः अस्ति। तेन सह आहारोऽपि अस्ति। प्रयाणे क्लेशः मा भवतु इति उद्देशेन एतत् सज्जीकृतवती अस्मि अहम्" इति।

राघवः सुशीलया दत्तं स्यूतं स्वीकृत्य गृहं गत्वा कुतूहलेन स्यूतम् उद्घाट्य दृष्टवान्। तत्र सुशीलायाः पत्रं, नाणकानि च दृष्ट्वा राघवः शङ्करमूर्तेः वञ्चनाबुद्धिं ज्ञातवान्।

अनन्तरं राघवः स्ववस्तूनि एकस्यां पेटिकायां पूरयित्वा प्रयाणार्थं प्रस्थितः। मार्गे अन्यः कश्चित् प्रयाणिकः लब्धः। एतस्मात् सन्तुष्टः राघवः, सहप्रयाणिकः



वञ्चकः इति अजानन् स्वकीयां कथां सहप्रयाणिकम् उक्तवान्।

उभौ अपि प्रयाणिकौ किञ्चिद्दूरं गतवन्तौ। तावता श्रान्तौ तौ विश्रान्त्यर्थं कस्यचित् वृक्षस्य अधः उपविष्टवन्तौ। सहप्रयाणिकः राघवम् उक्तवान् - "महती निद्रा मां बाधते। भवान् कञ्चन कालं यावत् मम स्यूतस्य रक्षणं करोतु। मम निद्रासमाप्त्यनन्तरम् अहं भवतः स्यूतस्य रक्षणं करोमि। तदा भवान् निद्रां कर्तुम् अर्हति" इति।

राघवः एतत् अङ्गीकृतवान्। प्रथमं सहप्रयाणिकः कञ्चन कालं यावत् निद्रां कृत्वा उत्थितः। अनन्तरं राघवः निद्रां कृतवान्। निद्रां समाप्य राघवस्य उत्थानसमये सहप्रयाणिकः तत्र न आसीत्। राघवस्य पेटिका अपि तत्र न आसीत्। 'अहं वञ्चितः अभवम्' इति राघवः खिन्नः।

किञ्चित्कालानन्तरम् आत्मानं निगृह्य राघवः कुसुमपुरं प्रति प्रस्थितः।

राघवस्य पेटिकां चोरितवान् सहप्रयाणिकः किञ्चिद्दूरं गत्वा कुतूहलेन पेटिकाम् उद्घाट्य दिग्भ्रान्तः जातः। यतः पेटिकायां कृष्णसर्पः दृश्यते स्म। सर्पस्य फणायां कश्चन मणिः विराजते स्म। सर्पस्य फूत्कारात् भीतः सहप्रयाणिकः आवरणेन पेटिकां पिहितवान्।

पेटिकास्थस्य सर्पस्य दर्शनात् यद्यपि सहप्रयाणिकः भीतः, तथापि 'नागमणेः विक्रयणं यदि करोमि, तर्हि प्रभूतं धनं प्राप्तुं शक्नोमि। अतः एषः सर्पः मारणीयः' इति विचिन्त्य पेटिकां अहितुण्डिकस्य





नागराजस्य समीपं नीतवान्।

प्रयाणिकस्य कथां श्रुत्वा नागराजः अतीव सन्तुष्टः। यतः तस्य देशस्य राजपुत्रः अनारोग्येण शय्याम् आश्रितवान् आसीत्। वैद्येन राजपुत्रस्य परीक्षां कृत्वा सूचितम् आसीत् - 'नागमणिम् आनीय राजपुत्रस्य स्पर्शः कार्यते चेत् राजपुत्रः स्वस्थः भविष्यति' इति। यः नागमणिम् आनेष्यति, तस्मै अर्धराज्यं दास्यामि इति राजा घोषितवान् आसीत्।

नागराजः प्रयाणिकम् उक्तवान् - ''दिनद्वयं सर्पस्य पूजा करणीया। भवान् दिनद्वयानन्तरम् आगत्य मिलतु'' इति।

प्रयाणिकः नागराजस्य वचनम् अङ्गीकृतवान्।

नागराजः प्रयाणिकं वञ्चयितुम् इष्टवान्। अतः सः प्रयाणिकेन दत्तया पेटिकया सदृशीम् एव काञ्चित् पेटिकां सज्जीकृतवान्। तस्यां पेटिकायां मृतं सर्पमेकं स्थापितवान्। मृतसर्पस्य फणाभागे काचकमणिं संस्थाप्य तां पेटिकां प्रयाणिकाय यच्छन् उक्तवान् - ''मम पूजाकारणतः पेटिकास्थः सर्पः मृतः भविष्यति। तस्मात् नागमणिः भवदीयः भविष्यति। मया पूजा कृता इति कारणतः मह्यं भवता दश रूप्यकाणि दातव्यानि'' इति।

प्रयाणिकः नागराजाय दश रूप्यकाणि दत्त्वा पेटिकां स्वीकृतवान्। नागराजस्य वञ्चनां ज्ञातुम् अशक्तः प्रयाणिकः महता सन्तोषेण ततः निर्गतवान्।

प्रयाणिकस्य निर्गमनानन्तरं नागराजः प्रयाणिकतः अपहृतां पेटिकाम् उद्घाट्य आश्चर्यचकितः। यतः पेटिकायां कानिचन ताडपत्राणि आसन्। एतत् दृष्ट्वा नागराजः चिन्तितवान् - 'प्रयाणिकः मां वञ्चितवान्' इति। तथापि तेषु ताडपत्रेषु किं लिखितं स्यात् इति ज्ञातुम् इच्छन् सः कस्यचित् पण्डितस्य गृहं गतवान्।

पण्डितः ताडपत्रस्थान् कांश्चन श्लोकान् पठित्वा चिन्तितवान् - 'एतत् एकं महाकाव्यम्' इति। 'एतादृशं महाकाव्यं यदि महाराजाय दर्शयामि तर्हि उत्तमं पारितोषिकं प्राप्तुं शक्नोमि' इति विचिन्त्य नागराजं स्वकीयम् आशयं प्रकटयितुम्

अनिच्छन् सः उक्तवान् - "केनचित् असम्बद्धं किमपि अत्र लिखितम् अस्ति। अत्र विशेषः तु कोऽपि नास्ति। किन्तु एषा पेटिका मम इष्टाय अभवत् । अतः अहं पञ्चाशद्रूप्यकैः एतां क्रेतुम् इच्छामि" इति। तावता एव सन्तुष्टः नागराजः पेटिकां पण्डिताय विक्रीय ततः गतवान्।

अनन्तरं पण्डितः तां पेटिकां स्वीकृत्य राजधानीं गत्वा विश्रान्त्यर्थं कस्याश्चित् धर्मशालायां स्थितवान्। तस्मिन् समये तत्र आगतः चोरः कश्चित् निद्रां कुर्वन्तं पण्डितं दृष्ट्वा, तस्य पेटिकाम् उद्घाटितवान् । सुवर्णनाणकैः पूर्णां पेटिकां दृष्ट्वा चोरः महता आनन्देन तां पेटिकाम् अपहृत्य ततः बहिः गतवान्। तावता राजभटाः तत्र आगताः। पेटिकायां कस्यचित् मनुष्यस्य शिरः दृष्टवन्तः च। भटाः तां पेटिकां चोरं च महाराजसमीपं नीतवन्तः।

एतावता राघवः कुसुमपुरं गत्वा संन्यासिनं दृष्टवान् । संन्यासी राघवम् उद्दिश्य - "युक्ते समये आगतवान् भवान्। राजकुमारस्य रक्षणार्थम् आवश्यकः नागमणिः, तस्य रक्षणार्थम् आवश्यकानि मन्त्रसहितानि ताडपत्राणि च मत्समीपे सन्ति । तेषाम् उपयोगेन अर्धराज्यं सम्पादयितुं शक्यते। आगच्छतु। राजधानीं गच्छाव" इति उक्त्वा राजधानीं प्रति प्रस्थितः। राघवः संन्यासिनम् अनुसृतवान्।

राघवः संन्यासी च राजधानीं प्राप्य राजसमीपं गतवन्तौ ।



संन्यासी नागमणिना राजकुमारस्य स्पर्शं कुर्वन् ताडपत्रस्थान् मन्त्रान् उच्चारितवान्। अनुक्षणं राजकुमारस्य शिरः अदृश्यम् अभवत्। तदीयं शरीरं च रक्तमयं जातम्।

एतस्मात् महाराजः अतीव क्रुद्धः। तदा संन्यासी महाराजं सान्त्वयन् उक्तवान् - "राजन्! भीतः मा भवतु। मणेः प्रभावः तीव्रः भवति इति कारणतः शिरः तं प्रभावं सोढुम् असमर्थं भवति। तदर्थं शरीरात् शिरः पृथक्कृतवान् अस्मि। इदानीं भवतः पुत्रस्य शरीरस्य चिकित्सा प्रचलन्ती अस्ति" इति।

तावता चोरेण सह तत्र आगताः भटाः प्रवृत्तं सर्वं महाराजं निवेदितवन्तः । महाराजः पेटिकाम् उद्घाटयितुम् उद्युक्तः। तावता 'सा पेटिका मदीया' इति वदन्

राघवः अग्रे आगत्य पेटिकाम् उद्घाट्य स्ववस्तूनि पेटिकायां यथापूर्वं सन्ति इति ज्ञात्वा अतीव सन्तुष्टः। तावता राजकुमारः निद्रातः इव उत्थितवान्।

राजकुमारः आश्चर्येण पितरं पृष्टवान् - "मम किम् अभवत् ?" इति।

महाराजः प्रवृत्तं सर्वं निवेदितवान्।

राजकुमारः स्वस्थः इति अतीव सन्तुष्टः राजा स्ववचनानुसारम् अर्धं राज्यं संन्यासिने दत्तवान्। तस्मिन् एव क्षणे संन्यासी आत्मना प्राप्तम् अर्धराज्यं राघवाय दत्तवान्।

तदा राघवः महाराजं सविनयं नमस्कृत्य उक्तवान् - "कृपया भवान् एव मदीयम् अपि राज्यं पालयतु" इति।

एतत् श्रुत्वा महाराजः प्रश्नार्थकदृष्ट्या संन्यासिनं दृष्टवान्।

तदा संन्यासी महाराजम् उक्तवान् - "राघवाय पेटिकापरिमितानि सुवर्ण-नाणकानि ददातु। अनन्तरम् एतं रक्षकभटैः सह तस्य ग्रामं प्रापयतु" इति।

संन्यासिनः वचनं श्रुत्वा राघवः सखेदम् - "स्वामिन्! अहं भवतः सकाशात् लोकज्ञानसम्पादनं विना कथं गृहं प्रति गच्छानि ?" इति पृष्टवान्।

तदा संन्यासी मन्दहासपूर्वकम् उक्तवान् - "लोकज्ञानम् अध्ययनेन न भवति। परोपकारबुद्धिः अत्यधिका भवति चेत् लोकज्ञानं सम्पादयितुं न शक्नोति भवान्। इदानीं भवान् धनिकः जातः अस्ति। महाराजस्य रक्षणम् अपि अस्ति। भवति अनुरागवती सुशीला लोकव्यवहारं सम्यक् जानाति। अतः भवान् तां परिणीय तस्याः वचनम् अनुसरतु। अद्यपर्यन्तं भवतः रक्षणार्थं मदीयां सर्वशक्तिं व्ययितवान् अहं श्रान्तः अस्मि इदानीम्। इतःपरं मम शक्तेः आवश्यकता यथा न भवेत् तथा विचिन्त्य व्यवहरतु" इति।

'महतः सौजन्यस्य कारणतः महानुभावानाम् अपि कष्टजनकः अभवम् अहम्' इति ज्ञात्वा राघवः अतीव लज्जितः अभवत्। अनन्तरं राघवः ततः स्वग्रामं गत्वा सुशीलां परिणीय सुखेन जीवितवान्।



# प्रकृतिवैचित्र्याणि



## आदिवानरः

१७८० तमे वर्षे इमेडगास्कर्लेमूर्नामकः प्राणी दृष्टिगोचरः जातः । आरम्भे चिन्तितम् आसीत् - 'आकारेण लघुः, पुच्छे केशयुक्तः, विशालनेत्रयुतः च एषः चिक्रोडः स्यात्' इति । किन्तु एषः न चिक्रोडः, अपि तु कश्चन आदिवानरः । एतेषां हस्तद्वये अपि दीर्घाः अङ्गुल्यः भवन्ति । वृक्षाणां त्वचः भागे विद्यमानानां कीटानां ग्रहणे एताः अङ्गुल्यः साहाय्यकाः भवन्ति । किन्तु एते आदिवानराः कीटान् विहाय अन्यत् किमपि न खादन्ति इति कारणतः एतज्जातीयानां प्राणिनां जीवनम् एव समस्यात्मकम् अस्ति ।



## सहनाशालिनः गृध्राः

अमेरिकादेशे एव अधिकतया दृश्यमानाः 'एवर् ग्लेड् कैट्स्' नामकानाम् गृध्राणाम् आहारः शम्बूकः । शम्बूकाः यदा शुक्तितः बहिः आगच्छन्ति, तदा केवलं गृध्राः तान् खादन्ति । एतेषाम् अवनता चञ्चूः अतीव बलवती । किन्तु एते गृध्राः शुक्तितः बलात् शम्बूकं ग्रहीतुं चञ्च्वाः उपयोगं न कुर्वन्ति । अतः शम्बूकानां बहिरागमनम् एव सहनया प्रतीक्षमाणाः भवन्ति एते गृध्राः । यदा शम्बूकः बहिः आगच्छति, तदा झटिति गृहीत्वा खादन्ति ।



## पुत्तिकाकीटाः तैलपसदृशाः

कागदं वृक्षं च खादन्तः पुत्तिकाकीटाः सामान्यतः सर्वैः अपि दृष्टाः एव । एते कीटाः यदि सूक्ष्मं परिशील्यन्ते, तर्हि एते आकारेण तैलपसदृशाः इति ज्ञायते । भूमेः अन्तर्भागे रन्ध्रेषु निवसन्तः एताः पुत्तिकाः महाकारकम् अपि वल्मीकं निर्मान्ति । यदा एते कीटाः प्रौढाः भवन्ति, तदा डयनसामर्थ्यं प्राप्य सुदूरं गच्छन्ति । मित्रम् अन्विष्य स्वकीयं नीडं रचयन्ति । श्वेतवर्णयुताः एते पुत्तिकाकीटाः प्रपञ्चे सर्वत्र दृष्टिगोचराः भवन्ति ।

Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!





SUPER
RUBBER

It's time to go back to school again. Time for text books. Time for games. Time to meet old friends. And make new ones. Time to start studying again. Because there's so much to learn about the world around you.

From all of us here at Chandamama, have a great year in school. And remember to tell us what you've learnt everyday, when you come home from school !

THE
HANDAMAMA
OLLECTION

ARTIG 1246

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

### विजितां शीर्षिकां मार्च - १९९५ मासे प्रकटयिष्यामः ।



S.G. Seshagiri



S.G. Seshagiri

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जनवरी - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट्-कार्ड) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

---

### 'नवम्बर्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - **चित्रग्रहणे मग्नोऽसि त्वम् ?**

द्वितीयचित्रम् - **शीघ्रं चित्रय सन्नद्धोऽहम् ॥**

प्रेषकः - जगदीशः, वनवासिविद्यार्थिनिलयः, चिपगेरि, वया - शिरसि - ५८१४०२ (उ.क.)


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) - रू. ६०.००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास् - ६०००२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---